| | | | |
|---|---|---|---|
| समृद्धिरोज आकूतिः | ११. | ७. | १८ |
| समेत विश्वे वचसा | ७. | २२. | १ |
| समोहे वा य आशत | २०. | ७१. | २ |
| सम्यञ्चं तन्तुं प्रदिशो | १३. | ३. | २० |
| सम्राज्ञ्येधि श्वशुरेषु | १४. | १. | ४४ |
| सम्राडस्यसुराणां ककुन् | ६. | ८६. | ३ |
| स य एवं विदुष | ११. | ३(३). | ५ |
| स य एवं विदुषा | १५. | १२. | ४ |
| स य एवं विद्वानुदक | ९. | ६(४). | ९ |
| स य एवं विद्वान्क्षीर | ९. | ६(४). | १ |
| स य एवं विद्वान्त्सर्पि | ९. | ६(४). | ३ |
| स य एवं विद्वान्न | ९. | ६(२). | ७ |
| स य एवं विद्वान्मधू | ९. | ६(४). | ५ |
| स य एवं विद्वान्मांस | ९. | ६(४). | ७ |
| स य ओदनस्य महिमानं | ११. | ३(१). | २३ |
| स यज्ञः प्रथमो भूतो | १३. | १. | ५५ |
| स यज्ञस्तस्य यज्ञः | १३. | ४(४). | १२ |
| स यत्पशूननु व्यचलद् | १५. | १४. | ११ |
| स यत्पितॄननु व्यचलद् | १५. | १४. | १३ |
| स यत्प्रजा अनु व्यचलत् | १५. | १४. | २१ |
| स यत्प्रतीचीं दिशमनु | १५. | १४. | ५ |
| स यत्प्राचीं दिशमनु | १५. | १४. | १ |
| स यत्सर्वानन्तर्देशाननु | १५. | १४. | २३ |
| स यदुदीचीं दिशमनु | १५. | १४. | ७ |
| स यदूर्ध्वां दिशमनु | १५. | १४. | १७ |
| स यद्दक्षिणां दिशमनु | १५. | १४. | ३ |
| स यद्देवाननु व्यचलद् | १५. | १४. | १९ |
| स यद्ध्रुवां दिशमनु | १५. | १४. | ९ |
| स यन्मनुष्याननु | १५. | १४. | १५ |
| सरस्वति या सरथं | १८. | १. | ४३ |
| | १८. | ४. | ४७ |
| सरस्वति व्रतेषु ते | ७. | ७०. | १ |
| सरस्वतीं देवयन्तो | १८. | १. | ४१ |
| | १८. | ४. | ४५ |
| सरस्वतीं पितरो | १८. | १. | ४२ |
| | १८. | ४. | ४६ |
| सरस्वतीमनुमतिं | ५. | ७. | ४ |
| स राजसि पुरुष्टुतँ | २०. | ६१. | ६ |
| | २०. | ६२. | १० |
| स रुद्रो वसुवनिर्वसुदेये | १३. | ४(३). | ५ |
| सरूपा नाम ते माता | १. | २४. | ३ |
| सरूपौ द्वौ विरूपौ द्वौ | ५. | २३. | ४ |
| सर्पानुसर्प पुनर्वो | २. | २४. | ४ |
| सर्वं तद्राजा वरुणो | ४. | १६. | ५ |
| सर्वं परिक्रोशं जहि | २०. | ७४. | ७ |
| सर्वज्यानिः कर्णौ | १२. | ५(३). | ११ |
| सर्वदा वा एष युक्त | ९. | ६(२). | १० |
| सर्वाँल्लोकान्त्समजयन् | ११. | १०. | १२ |
| सर्वाः समग्रा ओषधी | ८. | ७. | १९ |
| सर्वाण्यस्यां क्रूराणि | १२. | ५(३). | ३ |
| सर्वाण्यस्यां घोराणि | १२. | ५(३). | २ |
| सर्वा दिशः समचरद् | १३. | २. | ४१ |
| सर्वानग्ने सहमानः | १२. | २. | ४६ |
| सर्वान्कामान्पूरयत्या | ३. | २९. | २ |
| सर्वान्कामान्यमराज्ये | १२. | ४. | ३६ |
| सर्वान्त्समागा अभिजित्य | १२. | ३. | ३६ |
| सर्वान्देवानिदं ब्रूमः | ११. | ६. | २० |
| सर्वास्याङ्गा पर्वाणि | १२. | ५(७). | १० |
| सर्वास्याङ्गा पर्वा मूलानि | १२. | ५(५). | ४ |
| सर्वे अस्मिन्देवा एकवृतो | १३.. | ४(२). | ८ |
| सर्वे गर्भादवेपन्त | १०. | १०. | २३ |
| सर्वे देवा अत्यायन्ति | ११. | १०. | १४ |
| सर्वे देवा अत्यायन्तु | ११. | १०. | १५ |
| सर्वे देवा उपाशिक्षन्त | ११. | ८. | १७ |
| सर्वेभ्योऽङ्गिरोभ्यो | १९. | २२. | १८ |
| सर्वेषां च क्रिमीणां | ५. | २३. | १३ |
| सर्वो वा एष जग्ध | ९. | ६(२). | ८ |
| सर्वो वा एषोजग्ध | ९. | ६(२). | ९ |
| सर्वो वै तत्र जीवति | ८. | २. | २५ |
| स वरुणः सायमग्नि | १३. | ३. | १३ |
| स वा अग्नेरजायत | १३. | ४(४). | ८ |
| स वा अद्भ्योजायत | १३. | ४(४). | ९ |
| स वा अन्तरिक्षादजायत | १३. | ४(४). | ३ |
| स वा अह्नोजायत | १३. | ४(४). | १ |
| स वा ऋग्भ्योजायत | १३. | ४(४) | १० |
| सवितः श्रेष्ठेन रूपेणास्या | ५. | २५. | १२ |
| सविता प्रसवानामधिपतिः | ५. | २४. | १ |
| स विशः सबन्धूनन्नमन् | १५. | ८. | २ |
| स विशोनु व्यचलत् | १५. | ९. | १ |
| स विश्वा प्रति चाक्लृप | ६. | ३६. | २ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| हिरण्ययी नौ० चक्षणं | १९. | ३९. | ७ | ७८१ | हृयन्तु त्वा प्रतिजनाः | ३. | ३. | ५ |
| हिरण्ययी नौ० पुष्पं | ५. | ४. | ४ | ६२० | ह्रयामि ते मनसा | १८. | २. | २१ |

॥ इत्यथर्ववेदमन्त्राणां वर्णानुक्रमणी ॥

## ॥ इति चतुर्वेदमन्त्राणां वर्णानुक्रमण्यः ॥

# अथ प्रथमं काण्डम्

### ( १ ) प्रथमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । वाचस्पतिर्देवता । (१-३) प्रथमादितृचस्यानुष्टुप्, (४) चतुर्थ्या ऋचश्च चतुष्पदा विराडुरोबृहती छन्दसी ॥

ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः ।
वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥१॥
पुनरेहि वाचस्पते देवेन मनसा सह ।
वसोष्पते नि रमय मय्येवास्तु मयि श्रुतम् ॥२॥
इहैवाभि वि तनूभे आर्त्नी इव ज्यया ।
वाचस्पतिर्नि यच्छतु मय्येवास्तु मयि श्रुतम् ॥३॥
उपहूतो वाचस्पतिरुपास्मान्वाचस्पतिर्ह्वयताम् ।
सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि ॥४॥

ये । त्रिऽसप्ताः । परिऽयन्ति । विश्वा । रूपाणि । बिभ्रतः ।
वाचः । पतिः । बला । तेषाम् । तन्वः । अद्य । दधातु । मे ॥ १ ॥

पुनः । आ । इहि । वाचः । पते । देवेन । मनसा । सह ।
वसोः । पते । नि । रमय । मयि । एव । अस्तु । मयि श्रुतम् ॥ २ ॥
इह । एव । अभि । वि । तनु । उभे इति । आर्त्नी इवेत्यार्त्नीऽइव । ज्यया ।
वाचः । पतिः । नि । यच्छतु । मयि । एव । अस्तु । मयि । श्रुतम् ॥ ३ ॥

उपऽहूतः । वाचः । पतिः । उप । अस्मान् । वाचः । पतिः । ह्वयताम् ।
सम् । श्रुतेन । गमेमहि । मा । श्रुतेन । वि । राधिषि ॥ ४ ॥

**Vācaspatih**
(Lord of Speech)

**I.1.1** May, this day, the Lord of Speech (Vācaspati) assign to me the selves and powers of those tripleseven (trişapteh) that roam all around wearing all the shapes and forms (rupāṇi). (3+7=10; 3x7=21; 3+5+7=15; 15+21x10=360) -(see also Av.I.27.1.).

**I.1.2** O Lord of Speech, may you come again with the mind divine. O Lord of Wealth may you stay here in comfort. May I retain in me as the heard one. (i.e.all that I have heard of the Divine Revelation from the earliest sages).

**I.1.3** May you stretch on the string tightly forward just here as it were the two ends of a bow (Thus, may you spread your arms of shelter). May the Lord of Speech so order (and bless) that I may retain what I learn as the heard one.

**I.1.4** The Lord of Speech has been invoked.May we be united with true knowledge. I never be at variance with the divine Knowledge (the heard one).

### ( २ ) द्वितीयं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः। चन्द्रमाः पर्जन्यश्च देवते। (१-२, ४) प्रथमाद्वितीयाचतुर्थीनामृचामनुष्टुप्, (३) तृतीयायाश्च त्रिपदा विराड्गायत्री छन्दसी ॥

विद्मा शरस्य पितरं पर्जन्यं भूरिधायसम्।
विद्मो ष्वस्य मातरं पृथिवीं भूरिवर्पसम् ॥१॥
ज्याके परि णो नमाश्मानं तन्वं कृधि।
वीडुर्वरीयोरातीरप द्वेषांस्या कृधि ॥२॥
वृक्षं यद्गावः परिषस्वजाना अनुस्फुरं शरमर्चन्त्यृभुम्।
शरुमस्मद्यावय दिद्युमिन्द्र ॥३॥
यथा द्यां च पृथिवीं चान्तस्तिष्ठति तेजनम्।
एवा रोगं चास्रावं चान्तस्तिष्ठतु मुञ्ज इत् ॥४॥

विद्म। शरस्य। पितरम्। पर्जन्यम्। भूरिऽधायसम्।
विद्मो इति। सु। अस्य। मातरम्। पृथिवीम्। भूरिऽवर्पसम् ॥ १ ॥
ज्याके। परि। नः। नम। अश्मानम् तन्वम्। कृधि।
वीडुः। वरीयः। अरातीः। अप। द्वेषांसि। आ। कृधि ॥ २ ॥
वृक्षम्। यत्। गावः। परिऽसस्वजानाः। अनुऽस्फुरम। शरम्। अर्चन्ति। ऋभुम्
शरुम्। अस्मत्। यवय। दिद्युम्। इन्द्र ॥ ३ ॥
यथा। द्याम्। च। पृथिवीम्। च। अन्तः। तिष्ठति। तेजनम्।
एव। रोगम्। च। आऽस्रावम्। च। अन्तः। तिष्ठतु। मुञ्जः। इत् ॥ ४ ॥

### ( ३ ) तृतीयं सूक्तम्

(१-९) नवर्चस्यास्य सूक्तस्याथर्वा ऋषिः। मन्त्रोक्ताः सर्वा देवताः। (१-५) प्रथमादिपञ्चर्चां पथ्यापङ्क्तिः, (६-९) षष्ठादिचतसृणाञ्चानुष्टुप् छन्दसी ॥

विद्मा शरस्य पितरं पर्जन्यं शतवृष्ण्यम्।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥१॥

विद्म। शरस्य। पितरम्। पर्जन्यम् शतऽवृष्ण्यम्।
तेन। ते। तन्वे। शम्। करम्। पृथिव्याम्। ते। निऽसेचनम्। बहिः।
ते। अस्तु। बाल्। इति ॥ १ ॥

## Parjanyaḥ

**I.2.1** We know the showering cloud as the father of the reed, with which an arrow is made, that nourishes in various ways.We also know very well earth, as its mother, the earth imparting profuse designs.

**I.2.2** O bow-string, may you bend round for us.Make our bodies hard as stone. Being strong and superior, may you dispel from us the miserliness and the malice.

**I.2.3** As the bow-strings embracing the wooden staff of the bow sing praises to the mighty whizzing arrow, O resplendent Lord, may you ward off the shining shaft from us.

**I.2.4** As the sharpened point of arrow stands between the heaven and earth, so may this reed grass stand between the disease and fatal dysenteric discharge.

## Parjanyaḥ etc.

**I.3.1** We all know the reed's father, this shower to be the cloud (rain cloud or God), having hundred fold generative power. With this (reed) I shall bring weal and comfort to your body. May there be your out-pouring on the earth. May it come out of you with a splash (Parjanya).

विद्मा शरस्य पितरं मित्रं शतवृष्ण्यम् ।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥२॥
विद्मा शरस्य पितरं वरुणं शतवृष्ण्यम् ।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥३॥
विद्मा शरस्य पितरं चन्द्रं शतवृष्ण्यम् ।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥४॥
विद्मा शरस्य पितरं सूर्यं शतवृष्ण्यम् ।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥५॥
यदान्त्रेषु गवीन्योर्यद्वस्तावधि संश्रुतम् ।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥६॥

विद्म । शरस्य । पितरम । मित्रम् । शतऽवृष्ण्यम् ।
तेन । ते । तन्वे । शम् । करम् । पृथिव्याम् । ते । निऽसेचनम् । बहिः । ते ।
अस्तु । बाल् । इति ॥ २ ॥
विद्म । शरस्य । पितरम् । वरुणम् । शतऽवृष्ण्यम् ।
तेन । ते । तन्वे । शम् । करम् । पृथिव्याम् । ते । निऽसेचनम् । बहिः । ते ।
अस्तु । बाल् । इति ॥ ३ ॥
विद्म । शरस्य । पितरम् । चन्द्रम् । शतऽवृष्ण्यम् ।
तेन । ते । तन्वे । शम् । करम् । पृथिव्याम् । ते । निऽसेचनम् । बहिः ।
त । अस्तु । बाल् । इति ॥ ४ ॥
विद्म । शरस्य । पितरम् । सूर्यम् । शतऽवृष्ण्यम् ।
तेन । ते । तन्वे । शम् । करम् । पृथिव्याम् । ते । निऽसेचनम् । बहिः ।
ते । अस्तु । बाल् । इति ॥ ५ ॥
यत् । आन्त्रेषु । गवीन्योः । यत् । वस्तौ । अधि । समऽश्रितम् ।
एव । ते । मूत्रम् । मुच्यताम् । बहिः । बाल् । इति । सर्वकम् ॥ ६ ॥

**I.3.2** We all know the reed as father to be the vital breath (or the friendly Lord) having hundred fold generative power. With this (reed) I shall bring weal and comfort to your body. May there be your out-pouring on the earth. May it come out of you with a splash (Mitra).

**I.3.3** We all know the reed as the father to be the encompasser (sky or the venerable Lord) having hundred-fold generative power. With this (reed) I shall bring weal and comfort to your body. May there be your out-pouring on the earth. May it come out of you with a splash (Varuṇ).

**I.3.4** We all know the father of the reed, father to be the gladdener having hundred-fold generative power. With this (reed) I shall bring weal and comfort to your body. May there be your out-pouring on the earth. May it come out with a splash (Candra).

**I.3.5** We all know the reed's father to be the Sun (or impeller or creator, Savitṛ) having hundred-fold generative power. With this (reed) I shall bring weal and comfort to your body. May there be your out pouring on the earth. May it and all of it, come out of you with a splash (Sūrya or Savitṛ).

**I.3.6** Whatever urine is filled in your bowels (entrails), in both the groins and in the bladder, may all of it be released. May all of it come out with a splash.

प्र ते भिनद्मि मेहनं वर्त्रं वेशन्त्या इव ।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥७॥
विषितं ते वस्तिबिलं समुद्रस्योदधेरिव ।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥८॥
यथेषुका परापतदवसृष्टाधि धन्वनः ।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥९॥

प्र । ते । भिनद्मि । मेहनम् । वर्त्रम् । वेशन्त्याःऽइव ।
एव । ते । मूत्रम् । मुच्यताम् । बहिः । बाल् । इति । सर्वकम् ॥ ७ ॥

विऽसितम् । ते । वस्तिऽबिलम् । समुद्रस्य । उदधेःऽइव ।
एव । ते । मूत्रम् । मुच्यताम् । बहिः । बाल् । इति । सर्वकम् ॥ ८ ॥

यथा । इषुका । पराऽअपतत् । अवऽसृष्टा । अधि । धन्वनः ।
एव । ते । मूत्रम् । मुच्यताम् । बहिः । बाल् । इति । सर्वकम् ॥ ९ ॥

( ४ ) चतुर्थं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य सिन्धुद्वीप ऋषिः । अपांनपात् सोम आपश्च देवताः । (१-२) प्रथमादित्रचस्य गायत्री, (४) चतुर्थ्या ऋचश्च पुरस्ताद्बृहती छन्दसी ॥

अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् । पृञ्चतीर्मधुना पयः ॥१॥
अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ॥२॥
अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः । सिन्धुभ्यः कर्त्वं हविः ॥३॥

अम्बयः । यन्ति । अध्वऽभिः । जामयः । अध्वरिऽयताम् ।
पृञ्चतीः । मधुना । पयः ॥ १ ॥

अमूः । याः । उप । सूर्ये । याभिः । वा । सूर्यः । सह ।
ताः । नः । हिन्वन्तु । अध्वरम् ॥ २ ॥

अपः । देवीः । उप । ह्वये । यत्र । गावः । पिबन्ति । नः ।
सिन्धुऽभ्यः । कर्त्वम् । हविः ॥ ३ ॥

**I.3.7** I hereby open your urinary passage like the weir or dam of a tank. So may your urine be released. May all of it come out with a splash.

**I.3.8** Orifice of your bladder has been opened like a flood gate holding the water of an ocean. So may your urine be released. May all of it come out with a splash.

**I.3.9** As a small arrow let loose from and archer's bow flies forth, so may your urine be released. May all of it come out with a splash.

## Āpaḥ

**I.4.1** As mothers always bring happiness to their children, in the same manner, the streams, nourishers of mankind, flow incessantly, adding milk and honey to their waters all the way. (Also Ṛg. I.23.16)

**I.4.2** May these streams of water which are contiguous to the Sun (in the sense that water is carried away by rays) and those waters with which the Sun is associated, be propitious to our sacred work and worship. (Also Ṛg. I.23.17)

**I.4.3** I invoke the Lord for the divine waters which are enjoyed by the rays of the Sun. For these flowing streams, we offer our gratitude (to the Lord) (cf.Ṛg. I.23.18)

अप्स्व॒न्तर॒मृत॑म॒प्सु भे॑ष॒जम् ।
अ॒पामु॒त प्रश॑स्तिभि॒रश्वा॒ भव॑थ वा॒जिनो॒ गावो॑ भवथ वा॒जिनीः॑ ॥४॥

अ॒प्ऽसु । अ॒न्तः । अ॒मृत॑म् । अ॒प्ऽसु । भे॒ष॒जम् ।
अ॒पाम् । उ॒त । प्रश॑स्तिऽभिः । अश्वाः॑ । भव॑थ । वा॒जिनः॑ । गावः॑ । भ॒व॒थ ।
वा॒जिनीः॑ ॥ ४ ॥

( ५ ) पञ्चमं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्य सिन्धुद्वीप ऋषिः । अपांनपात् सोम आपश्च देवताः । गायत्री छन्दः ॥

आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन । म॒हे रणा॑य॒ चक्ष॑से ॥१॥
यो वः॑ शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह नः॑ । उ॒श॒तीरि॑व मा॒तरः॑ ॥२॥
तस्मा॒ अरं॑ गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ । आपो॑ ज॒नय॑था च नः ॥३॥
ईशा॑ना॒ वार्या॑णां॒ क्षय॑न्तीश्चर्षणी॒नाम् । अ॒पो या॑चामि भेष॒जम् ॥४॥

आपः॑ । हि । स्थ । म॒यः॒ऽभुवः॑ । ताः । न॒ः । ऊ॒र्जे । द॒धा॒त॒न ।
म॒हे । रणा॑य । चक्ष॑से ॥ १ ॥
यः । व॒ः । शि॒वऽत॑मः । रसः॑ । तस्य॑ । भा॒ज॒य॒त । इ॒ह । न॒ः ।
उ॒श॒तीःऽइ॑व । मा॒तरः॑ ॥ २ ॥
तस्मै॑ । अर॑म् । ग॒मा॒म॒ । व॒ः । यस्य॑ । क्षया॑य । जिन्व॑थ ।
आपः॑ । ज॒नय॑थ । च॒ । न॒ः ॥ ३ ॥
ईशा॑नाः । वार्या॑णाम् । क्षय॑न्तीः । च॒र्ष॒णी॒नाम् ॥
अ॒पः । या॒चा॒मि॒ । भे॒ष॒जम् ॥ ४ ॥

( ६ ) षष्ठं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्य सिन्धुद्वीपोऽथर्वा वा ऋषिः । अपांनपात् सोम आपश्च देवताः ।
(१–३) प्रथमादितृचस्य गायत्री, (४) चतुर्थ्या ऋचश्च पथ्यापङ्क्तिश्छन्दसी ॥

शं नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑ । शं योर॒भि स्र॑वन्तु नः ॥१॥

शम् । न॒ः । दे॒वीः । अ॒भिष्ट॑ये । आपः॑ । भ॒व॒न्तु॒ । पी॒तये॑ ।
शम् । योः । अ॒भि । स्र॒व॒न्तु॒ । न॒ः ॥ १ ॥

I.4.4 O learned persons, may you know that there is ambrosia in the waters; there is healing balm in them, and there are medicinal herbs; know this, and by their proper use become vigorous like horses and kine.(cf.Ṛg. I.23.19)

## Āpaḥ

**I.5.1** Since, waters, you are the source of happiness, grant to us energy giving food, and an insight to enjoy your divine splendour. (also Ṛg. X.9.1)

**I.5.3** May we, O waters, quickly come to you for food, shelter and procreant strength which you are always pleased to bestow upon us. (also Ṛg.X.9.3).

**I.5.4** O waters, sovereigns of precious treasures, and granters of habitations to men, I solicit of you medicine (for the cure of my infirmities).

## Āpaḥ

**I.6.1** May the divine waters be propitious to us, for the fulfillment of desires, and for our drinking. Let them shower on us joy and fearlessness. (also Ṛg. X.9.4)

**अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशम्भुवम् ॥२॥**
**आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक्च सूर्यं दृशे ॥३॥**
**शं न आपो धन्वन्या३ः शमु सन्त्वनूप्याः ।**
**शं नः खनित्रिमा आपः शमु याः कुम्भ आभृताः शिवा नः सन्तु वार्षिकीः ॥४॥**

अप्ऽसु । मे । सोमः । अब्रवीत् । अन्तः । विश्वानि । भेषजा ।
अग्निम् । च । विश्वऽशंभुवम् ॥ २ ॥

आपः । पृणीत । भेषजम् । वरूथम् । तन्वे । मम ।
ज्योक् । च । सूर्यम् । दृशे ॥ ३ ॥

शम् । नः । आपः । धन्वन्याः । शम् । ऊँ इति । सन्तु । अनूप्याः ।
शम् । नः । खनित्रिमाः । आपः । शम् । ऊँ इति । याः । कुम्भे । आऽभृताः ।
शिवाः । नः । सन्तु । वार्षिकीः ॥ ४ ॥

( ७ ) सप्तमं सूक्तम्

(१–७) सप्तर्चस्यास्य सूक्तस्य चातन ऋषिः । (१–२, ३, ४–७) प्रथमाद्वितीययोर्ऋचोस्तृतीयापूर्वार्द्धस्य चतुर्थ्यादिचतसृणाञ्चाग्निः, (३) तृतीयाया उत्तरार्द्धस्य चाग्नीन्द्रौ देवते । (१–४, ६–७) प्रथमादिचतुर्ऋचां षष्ठीसप्तम्योश्चानुष्टुप्, (५) पञ्चम्याश्च त्रिष्टुप् छन्दसी ॥

**स्तुवानमग्न आ वह यातुधानं किमीदिनम् ।**
**त्वं हि देव वन्दितो हन्ता दस्योर्बभूविथ ॥१॥**
**आज्यस्य परमेष्ठिञ्जातवेदस्तनूवशिन् ।**
**अग्ने तौलस्य प्राशान यातुधानान्वि लापय ॥२॥**
**वि लपन्तु यातुधाना अत्रिणो ये किमीदिनः ।**
**अथेदमग्ने नो हविरिन्द्रश्च प्रति हर्यतम् ॥३॥**

स्तुवानम् । अग्ने । आ । वह । यातुऽधानम् । किमीदिनम् ।
त्वम् । हि । देव । वन्दितः । हन्ता । दस्योः । बभूविथ ॥ १ ॥

आज्यस्य । परमेऽस्थिन् । जातऽवेदः । तनूऽवशिन् ।
अग्ने । तौलस्य । प्र । अशान । यातुऽधानान् । वि । लापय ॥ २ ॥

वि । लपन्तु । यातुऽधानाः । अत्रिणः । ये । किमीदिनः ।
अथ । इदम् । अग्ने । नः । हविः । इन्द्रः । च । प्रति । हर्यतम् ॥ ३ ॥

**I.6.2** Wise men have acclaimed that within the waters dwell all balms that heal, the waters contain all the healing herbs, and also the fire, the benefactor of the universe. (also Ṛg. I.23.20).

**I.6.3** Waters, bring to perfection all disease-dispelling medicaments for the up-keep of my body, so that I may live long to see the bright sun. (also Ṛg. I.23.21).

**I.6.4** May the waters of the desert be for our well-being; also for well-being the waters of the low lands.May the waters dug out from earth be for our well-being; also for well-being those , that have been brought in pitchers. May the rain-waters also be beneficial for us (joy-giving to us).

## Agnih

**I.7.1** O adorable Lord, may you bring here the vile informer (the deceit) who has confessed him-self. O Lord, our reverence to you, for surely you are (and you have been) the killer of the evil spirit or barbarism.

**I.7.2** O most exalted Lord, O omniscient, O controller of body, may you consume butter and oil,(in a prescribed quantity), and make the deceit weep in mourning.

**I.7.3** May the deceits, who are vagrants and vile informers, mourn, then O adorable Lord, adorable may and resplendent, accept our this oblation.

अग्निः पूर्व आ रभतां प्रेन्द्रो नुदतु बाहुमान् ।
ब्रवीतु सर्वो यातुमानयमस्मीत्येत्य ॥४॥

पश्याम ते वीर्यं जातवेदः प्र णो ब्रूहि यातुधानान्नृचक्षः ।
त्वया सर्वे परितप्ताः पुरस्तात्त आ यन्तु प्रब्रुवाणा उपेदम् ॥५॥

आ रभस्व जातवेदोऽस्माकार्थाय जज्ञिषे ।
दूतो नो अग्ने भूत्वा यातुधानान्वि लापय ॥६॥

त्वमग्ने यातुधानानुपबद्धाँ इहा वह ।
अथैषामिन्द्रो वज्रेणापि शीर्षाणि वृश्चतु ॥७॥

अग्निः । पूर्वः । आ । रभताम् । प्र । इन्द्रः । नुदतु । बाहुऽमान् ।
ब्रवीतु । सर्वः । यातुऽमान् । अयम् । अस्मि । इति । आऽइत्य ॥ ४ ॥

पश्याम । ते । वीर्यम् । जातऽवेदः । प्र । नः । ब्रूहि । यातुऽधानान् । नृऽचक्षः ।
त्वया । सर्वे । परिऽतप्ताः । पुरस्तात् । ते । आ । यन्तु । प्रऽब्रुवाणाः । उप । इदम् ॥ ५ ॥

आ । रभस्व । जातऽवेदः । अस्माकं । अर्थाय । जज्ञिषे ॥
दूतः । नः । अग्ने । भूत्वा । यातुऽधानान् । वि । लापय ॥ ६ ॥

त्वम् । अग्ने । यातुऽधानान् । उपऽबद्धान् । इह । आ । वह ।
अथ । एषाम् । इन्द्रः । वज्रेण । अपि । शीर्षाणि । वृश्चतु ॥ ७ ॥

( ८ ) अष्टमं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्य चातन ऋषिः । (१–२) प्रथमाद्वितीययोर्ऋचोर्बृहस्पतिरग्नीषोमौ च, (३–४) तृतीयाचतुर्थ्योश्चाग्निर्देवताः । (१–३) प्रथमादितृचस्यानुष्टुप्, (४) चतुर्थ्याश्च बार्हतगर्भा त्रिष्टुप् छन्दसी ॥

इदं हविर्यातुधानान्नदी फेनमिवा वहत् ।
य इदं स्त्री पुमानकरिह स स्तुवतां जनः ॥१॥

अयं स्तुवान आगमदिमं स्म प्रति हर्यत ।
बृहस्पते वशे लब्ध्वाग्नीषोमा वि विध्यतम् ॥२॥

इदम् । हविः । यातुऽधानान् । नदी । फेनम्ऽइव । आ । वहत् ।
यः । इदम् । स्त्री । पुमान् । अकः । इह । सः । स्तुवताम् । जनः ॥१॥

अयम् । स्तुवानः । आ । अगमत् । इमम् । स्म । प्रति । हर्यत ।
बृहस्पते । वशे । लब्ध्वा । अग्नीषोमा । वि । विध्यतम् ॥ २ ॥

**I.7.4** May the adorable and resplendent Lord with powerful arms push their deceits hard, so that everyone of them comes and speaks out, "this am I. I confess my guilt; I am here".

**I.7.5** O knower of each and everyone, may we behold your might. O the Keepers of watchmen, let you expose the deceits to us. Having been branded by you on the fore-front, let all of them come here confessing their guilts themselves.

**I.7.6** Take hold of them, O knower of each and every-one. You and your existence is for our sake. O adorable Lord, may you be our messenger and make the deceits weep and cry.

**I.7.7** O adorable Lord, may you bring the sorcerers (deceits) here captive and bound. May the resplendent Lord thereafter also chop off their heads with his bolt.

**Bṛhaspatiḥ, Agni-Soma**

**I.8.1** May this sacrifice bring the deceits here as a river brings the foam. What-so-ever woman or man has been committing such frauds, let she or he confess it.

**I.8.2** This one has come confessing. Let you welcome him. Subjugate him, O Lord Supreme. May the adorable Lord and the gladdener Lord pierce him through and through.

यातुधानस्य सोमप जहि प्रजां नयस्व च ।
नि स्तुवानस्य पातय परमक्ष्युतावरम् ॥३॥
यत्रैषामग्ने जनिमानि वेत्थ गुहा सतामत्रिणां जातवेदः ।
तांस्त्वं ब्रह्मणा वावृधानो जह्येषां शततर्हमग्ने ॥४॥

यातुऽधानस्य । सोमऽप । जहि । प्रऽजाम् । नयस्व । च ।
निः । स्तुवानस्य । पातय । परम् । अक्षि । उत । अवरम् ॥ ३ ॥
यत्र । एषाम् । अग्ने । जनिमानि । वेत्थ । गुहा । सताम् । अत्रिणाम् । जातऽवेदः ।
तान् । त्वम् । ब्रह्मणा । वावृधानः । जहि । एषाम् । शतऽतर्हम । अग्ने ॥ ४ ॥

## ( ९ ) नवमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । (१-२) प्रथमाद्वितीययोर्ऋचोरग्निपुरोगमा वस्वादयो मन्त्रोक्ताः, (३-४) तृतीयाचतुर्थ्योश्चाग्निर्देवताः । त्रिष्टुप् छन्दः ॥

अस्मिन्वसु वसवो धारयन्त्विन्द्रः पूषा वरुणो मित्रो अग्निः ।
इममादित्या उत विश्वे च देवा उत्तरस्मिञ्ज्योतिषि धारयन्तु ॥१॥
अस्य देवाः प्रदिशि ज्योतिरस्तु सूर्यो अग्निरुत वा हिरण्यम् ।
सपत्ना अस्मदधरे भवन्तूत्तमं नाकमधि रोहयेमम् ॥२॥
येनेन्द्राय समभरः पयांस्युत्तमेन ब्रह्मणा जातवेदः ।
तेन त्वमग्न इह वर्धयेमं सजातानां श्रैष्ठ्य आ धेह्येनम् ॥३॥

अस्मिन् । वसु । वसवः । धारयन्तु । इन्द्रः । पूषा । वरुणः । मित्रः । अग्निः ।
इमम् । आदित्याः । उत । विश्वे । च । देवाः । उत्ऽतरस्मिन् । ज्योतिषि । धारयन्तु ॥ १ ॥
अस्य । देवाः । प्रऽदिशि । ज्योतिः । अस्तु । सूर्यः । अग्निः । उत । वा । हिरण्यम् ।
सऽपत्नाः । अस्मत् । अधरे । भवन्तु । उत्ऽतमम् । नाकम् । अधि । रोहय ।
इमम् ॥ २ ॥
येन । इन्द्राय । सम्ऽअभरः । पयांसि । उत्ऽतमेन । ब्रह्मणा । जातऽवेदः ।
तेन । त्वम् । अग्ने । इह । वर्धय । इमम् । सऽजातानाम् । श्रैष्ठ्ये । आ ।
धेहि । एनम् ॥ ३ ॥

## Agnih

**I.8.3** O enjoyer of devotional bliss, despatch the progeny of the sorcerer (deceit) and lead it away. Make the deceit's eye, this as well as that, fall out.

**I.8.4** O adorable Lord, knower of each and everyone, wherever you know the races of these vagrants in their hide-outs, may you, strengthened by your search of and finding, destroy them in hundreds, O adorable Lord.

## Vasu

**I.9.1** May the young sages, the resplendent Lord, the nourisher Lord, the venerable Lord, the friendly Lord and the adorable Lord keep riches in this man. May the old sages and all the enlightened ones keep him in the highest light.

**I.9.2** O enlightened ones, may all the lights be under his command, whether of the Sun or of the fire or of the glittering gold. May our rivals be under our subjugation; may you make him ascend to the highest place of bliss.

**I.9.3** O knower of each and every one, with the same sublime knowledge, with which you had been providing the resplendent Lord with draughts of nourishing drink, O adorable Lord, may you exalt this man. May you place him at the highest among his kinsfolk.

ऐषां यज्ञमुत वर्चो ददेऽहं रायस्पोषमुत चित्तान्यग्ने ।
सपत्ना अस्मदधरे भवन्तूत्तमं नाकमधि रोहयेमम् ॥४॥

आ । एषाम् । यज्ञम् । उत । वर्चः । ददे । अहम् । रायः । पोषम् । उत ।
चित्तानि । अग्ने ।

सऽपत्नाः । अस्मत् । अधरे । भवन्तु । उत्ऽतमम् । नाकम् । अधि । रोहय ।
इमम् ॥ ४ ॥

( १० ) दशमं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । (१) प्रथमर्चोऽसुरः, (२–४) द्वितीयादितृचस्य च वरुणो देवते । (१–२) प्रथमाद्वितीययोस्त्रिष्टुप्, (३) तृतीयायाः ककुम्मत्यनुष्टुप्, (४) चतुर्थ्याश्चानुष्टुप् छन्दांसि ॥

अयं देवानामसुरो वि राजति वशा हि सत्या वरुणस्य राज्ञः ।
ततस्परि ब्रह्मणा शाशदान उग्रस्य मन्योरुदिमं नयामि ॥१॥
नमस्ते राजन्वरुणास्तु मन्यवे विश्वं ह्युग्र निचिकेषि द्रुग्धम् ।
सहस्रमन्यान्प्र सुवामि साकं शतं जीवाति शरदस्तवायम् ॥२॥
यदुवक्थानृतं जिह्वया वृजिनं बहु ।
राज्ञस्त्वा सत्यधर्मणो मुञ्चामि वरुणादहम् ॥३॥

अयम् । देवानाम् । असुरः । वि । राजति । वशा । हि । सत्या । वरुणस्य ।
राज्ञः ।

ततः । परि । ब्रह्मणा । शाशदानः । उग्रस्य । मन्योः । उत् । इमम् ।
नयामि ॥ १ ॥

नमः । ते । राजन् । वरुण । अस्तु । मन्यवे । विश्वम् । हि । उग्र । निऽचिकेषि । द्रुग्धम् ।
सहस्रम् । अन्यान् । प्र । सुवामि । साकम् । शतम् । जीवाति । शरदः । तव । अयम् ॥ २ ॥

यत् । उवक्थ । अनृतम् । जिह्वया । वृजिनम् । बहु ।
राज्ञः । त्वा । सत्यऽधर्मणः । मुञ्चामि । वरुणात् । अहम् ॥ ३ ॥

**I.9.4** O adorable Lord, I have taken to myself their sacrifice, their splendour, their abundance of riches as well as their minds. May our rivals be under us. May you make him ascend to the highest place of bliss.

## Asura

**I.10.1** This bestower of life (asura) of the bounties of nature rules supreme. The will of the venerable Lord, the king of all, has to be complied with. Even then strengthened with prayer, I save this man from the wrath of the furious one (asuḥ=prāṇa).

## Varuṇa

**I.10.2** O venerable Lord, the king of all, our homage to your wrath.O furious Lord, you take not of all the (ghastly) treacherous sins. Thousands of others I urge along with him. May this servant of yours live through a hundred autumns.

**I.10.3** For the false-hood and plenty of evil that you have been speaking with your tongue, I hereby get you released from the venerable Lord, the king of true ordinances

मुञ्चामि त्वा वैश्वानरादर्णवान्महतस्परि
सजातानुग्रेहा वद ब्रह्म चाप चिकीहि नः ॥४॥

मुञ्चामि । त्वा । वैश्वानरात् । अर्णवात् । महतः । परि ।
सऽजातान् । उग्र । इह । आ । वद । ब्रह्म । च । अप । चिकीहि । नः ॥ ४ ॥

( ११ ) एकादशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्याथर्वा ऋषिः । पूषादयो देवताः । (१) प्रथमर्चः पङ्क्तिः, (२) द्वितीयाया अनुष्टुप्, (३) तृतीयायाश्चतुष्पदोष्णिग्गर्भा ककुम्मत्यनुष्टुप्, (४-६) चतुर्थ्यादितृचस्य च पथ्यापङ्क्तिश्छन्दांसि ॥

वषट्टे पूषन्नस्मिन्त्सूतावर्यमा होता कृणोतु वेधाः ।
सिस्रतां नार्यृतप्रजाता वि पर्वाणि जिहतां सूतवा उ ॥१॥
चतस्रो दिवः प्रदिशश्चतस्रो भूम्या उत ।
देवा गर्भं समैरयन्तं व्यूर्णुवन्तु सूतवे ॥२॥
सूषा व्यूर्णोतु वि योनिं हापयामसि ।
श्रथया सूषणे त्वमव त्वं बिष्कले सृज ॥३॥
नेव मांसे न पीवसि नेव मज्जस्वाहतम् ।
अवैतु पृश्नि शेवलं शुने जराय्वत्तवेव जरायु पद्यताम् ॥४॥

वषट् । ते । पूषन् । अस्मिन् । सूतौ । अर्यमा । होता । कृणोतु । वेधाः ।
सिस्रताम् । नारी । ऋतऽप्रजाता । वि । पर्वाणि । जिहताम् । सूतवै । ऊँ इति ॥ १ ॥
चतस्रः । दिवः । प्रऽदिशः । चतस्रः । भूम्याः । उत ।
देवाः । गर्भम् । सम् । ऐरयन् । तम् । वि । ऊर्णुवन्तु । सूतवे ॥ २ ॥

सूषा । वि । ऊर्णोतु । वि । योनिम् । हापयामसि ।
श्रथय । सूषणे । त्वम् । अव । त्वम् । बिष्कले । सृज ॥ ३ ॥

नऽइव । मांसे । न । पीवसि । नऽइव । मज्जऽसु । आऽहतम् ।
अव । एतु । पृश्नि । शेवलम् । शुने । जरायु । अत्तवे । अव । जरायु ।
पद्यताम् ॥ ४ ॥

**I.10.4** I get you released completely from the watcher of all men very much agitated (in it) (arṇāvat). O formidable man, let you tell your kinsfolk here about it and respect our true (tenets) and knowledge.

## Puṣan etc.

**I.11.1** O nourisher Lord, dedication (vaṣat) to you. At this birth let the close companion (aryaman, the gyanocologist) act as a wise accomplisher. May this lady who has been bearing children in the past in a normal way, start bring forth her child this time also. Let her relax her limbs for child-birth.

**I.11.2** Four quarters of the sky as well as four regions of the earth and bounties of Nature have given motion to the foetus. May they unclose it for easy birth.

**I.11.3** Let this woman, having easy child-birth unclose her. We hereby make the vagina expand. O woman, release your genitals. O courageous woman, let the child come out.

**I.11.4** It is not as if fastened in the flesh, nor in the fat, nor as if in the marrows. Let the dappled and slimy after-birth come down for the dog to eat. Let the after-birth (jarāyu) descend.

वि ते भिनद्मि मेहनं वि योनिं वि गवीनिके ।
वि मातरं च पुत्रं च वि कुमारं जरायुणाव जरायु पद्यताम् ॥५॥
यथा वातो यथा मनो यथा पतन्ति पक्षिणः ।
एवा त्वं दशमास्य साकं जरायुणा पताव जरायु पद्यताम् ॥६॥

वि । ते । भिनद्मि । मेहनम् । वि । योनिम् । वि । गवीनिके इति ।
वि । मातरम् । च । पुत्रम् । च । वि । कुमारम् । जरायुणा । अव । जरायु ।
पद्यताम् ॥ ५ ॥
यथा । वातः । यथा । मनः । यथा । पतन्ति । पक्षिणः ।
एव । त्वम् । दशऽमास्य । साकम् । जरायुणा । पत । अव । जरायु । पद्यताम् ॥ ६ ॥

## ( १२ ) द्वादशं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । यक्ष्मनाशनरूपोऽर्थो देवता । (१) प्रथमर्चो जगती, (२–३) द्वितीयातृतीययोस्त्रिष्टुप्, (४) चतुर्थ्याश्चानुष्टुप् छन्दांसि ॥

जरायुजः प्रथम उस्रियो वृषा वातभ्रजा स्तनयन्नेति वृष्ट्या ।
स नो मृडाति तन्व ऋजुगो रुजन्य एकमोजस्त्रेधा विचक्रमे ॥१॥
अङ्गेअङ्गे शोचिषा शिश्रियाणं नमस्यन्तस्त्वा हविषा विधेम ।
अङ्कान्त्समङ्कान्हविषा विधेम यो अग्रभीत्पर्वास्या ग्रभीता ॥२॥
मुञ्च शीर्षक्त्या उत कास एनं परुष्परुराविवेशा यो अस्य ।
यो अभ्रजा वातजा यश्च शुष्मो वनस्पतीन्त्सचतां पर्वतांश्च ॥३॥

जरायुऽजः । प्रथमः । उस्रियः वृषा । वातऽअभ्रजाः । स्तनयन् । एति । वृष्ट्या ।
सः । नः । मृडाति । तन्वे । ऋजुऽगः । रुजन् । यः । एकम् । ओजः । त्रेधा ।
विऽचक्रमे ॥ १ ॥
अङ्गेऽअङ्गे । शोचिषा । शिश्रियाणम् । नमस्यन्तः । त्वा । हविषा । विधेम ।
अङ्कान् । समऽअङ्कान् । हविषा । विधेम । यः । अग्रभीत् । पर्व । अस्य । ग्रभीता ॥ २ ॥
मुञ्च । शीर्षक्त्याः । उत । कासः । एनम् । परुःऽपरुः । आऽविवेश । यः । अस्य ।
यः । अभ्रऽजाः । वातऽजाः । यः । च । शुष्मः । वनस्पतीन् । सचताम् । पर्वतान् । च ॥ ३ ॥

**I.11.5** I split apart your passage of womb, apart the vagina, and apart both the groins.I split apart the son from the mother and the child from the after-birth. May the after-birth descend.

**I.11.6** As the wind, as the mind and as the birds descend, so o foetus of ten months, may you descend along with the after-birth. May the after-birth descend.

## Yakṣmā-Disease and Cure

**I.12.1** Born first from the after-birth, a ruddy over-whelming , born of wind and the cloud, it (the puerperal fever) comes thundering with rain. May it spare our body. It goes on straight causing pain. Though being one, it progresses in three forms.

**I.12.2** To you, who cling to each and every part of the body burning (heat), we bow in reverence and offer oblations. We offer our oblations to the symptoms and sing of him who seized the joints of this man.

**I.12.3** Relieve him from the headache and from the cough that has entered into his each and every joint. May the disease, that has been caused by the cloud, by the wind or by the heat, be cured by resorting to herbs and medicine from hills and plants collected from mountains.

शं मे परस्मै गात्राय शमस्त्ववराय मे ।
शं मे चतुर्भ्यो अङ्गेभ्यः शमस्तु तन्वे३ मम ॥४॥

शम् । मे । परस्मै । गात्राय । शम् । अस्तु । अवराय । मे ।
शम् । मे । चतुःऽभ्यः । अङ्गेभ्यः । शम् । अस्तु । तन्वे । मम ॥ ४ ॥

( १३ ) त्रयोदशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । विद्युद्देवता । (१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप्, (३) तृतीयायाश्चतुष्पाद्विराड् जगती, (४) चतुर्थ्याश्च त्रिष्टुप्परा बृहतीगर्भा पङ्क्तिश्छन्दांसि ॥

नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे ।
नमस्ते अस्त्वश्मने येना दूडाशे अस्यसि ॥१॥
नमस्ते प्रवतो नपाद्यतस्तपः समूहसि ।
मृडया नस्तनूभ्यो मयस्तोकेभ्यस्कृधि ॥२॥
प्रवतो नपान्नम एवास्तु तुभ्यं नमस्ते हेतये तपुषे च कृण्मः ।
विद्म ते धाम परमं गुहा यत्समुद्रे अन्तर्निहितासि नाभिः ॥३॥
यां त्वा देवा असृजन्त विश्व इषुं कृण्वाना असनाय धृष्णुम् ।
सा नो मृड विदथे गृणाना तस्यै ते नमो अस्तु देवि ॥४॥

नमः । ते । अस्तु । विऽद्युते । नमः । ते । स्तनयित्नवे ।
नमः । ते । अस्तु । अश्मने । येन । दुःऽदाशे । अस्यसि ॥ १ ॥
नमः । ते । प्रऽवतः । नपात् । यतः । तपः । सम्ऽऊहसि ।
मृडय । नः । तनूभ्यः । मयः । तोकेभ्यः । कृधि ॥ २ ॥
प्रऽवतः । नपात् । नमः । एव । अस्तु । तुभ्यम् । नमः । ते । हेतये । तपुषे । च । कृण्मः ।
विद्म । ते । धाम । परमम् । गुहा । यत् । समुद्रे । अन्तः । निऽहिता । असि । नाभिः ॥ ३ ॥
याम् । त्वा । देवाः । असृजन्त । विश्वे । इषुम् । कृण्वानाः । असनाय । धृष्णुम् ।
सा । नः । मृड । विदथे । गृणाना । तस्यै । ते । नमः । अस्तु । देवि ॥ ४ ॥

**I.12.4** May it be well with the upper part of mine.May it be well with the lower part of mine. May it be well with four limbs of mine. May the whole of my body, be in perfect health.

## Vidyut-Deterrent Homage to Lightning

**I.13.1** O Lord, homage (Namaste) be to you the lightning, homage to you the thundering. Homage be to you the raining hail and stones, with which you drive away the delinquent

**I.13.2** Homage be to you, O never falling from the moral height, due to which quality you gather warmth (influence) . May you be gracious to ourselves and bestow happiness on our children.

**I.13.3** O never falling from the moral heights, let our homage be to you without fail. We pay homage to your weapon as well as to your influence. We know your supreme abode, the cave that is hidden in the centre of the ocean.

**I.13.4** O divine force, our homage be to you, whom all the enlightened ones create a powerful arrow for hurling.May you, winning laurels in battle, be gracious to us.

( १४ ) चतुर्दशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः। वरुणो यमो वा देवता। (१) प्रथमर्चः ककुम्मत्यनुष्टुप्, (२, ४) द्वितीयाचतुर्थ्योरनुष्टुप्, (३) तृतीयायाश्च चतुष्पाद्विराडनुष्टुप् छन्दांसि ॥

भगमस्या वर्च आदिष्यधि वृक्षादिव स्रजम्।
महाबुध्न इव पर्वतो ज्योक्पितृष्वास्ताम् ॥१॥
एषा ते राजन्कन्या वधूर्नि धूयतां यम।
सा मातुर्बध्यतां गृहेऽथो भ्रातुरथो पितुः ॥२॥
एषा ते कुलपा राजन्तामु ते परि दद्मसि।
ज्योक्पितृष्वासाता आ शीर्ष्णः शमोप्यात् ॥३॥
असितस्य ते ब्रह्मणा कश्यपस्य गयस्य च।
अन्तःकोशमिव जामयोऽपि नह्यामि ते भगम् ॥४॥

भगम्। अस्याः। वर्चः। आ। अदिषि। अधि। वृक्षात्ऽइव। स्रजम्।
महाबुध्नःऽइव। पर्वतः। ज्योक्। पितृषु। आस्ताम् ॥ १ ॥
एषा। ते। राजन्। कन्या। वधूः। नि। धूयताम्। यम।
सा। मातुः। बध्यताम्। गृहे। अथो इति। भ्रातुः। अथो इति। पितुः ॥ २ ॥
एषा। ते। कुलऽपाः। राजन्। ताम्। ऊँ इति। ते। परि। दद्मसि।
ज्योक्। पितृषु। आसातै। आ। शीर्ष्णः। शमऽओप्यात् ॥ ३ ॥
असितस्य। ते। ब्रह्मणा। कश्यपस्य। गयस्य। च।
अन्तःकोशम्ऽइव। जामयः। अपि। नह्यामि। ते। भगम् ॥ ४ ॥

( १५ ) पञ्चदशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः। मन्त्रोक्ता देवताः। (१) प्रथमर्चो भुरिग् बृहती, (२) द्वितीयायाः पथ्यापङ्क्तिः, (३-४) तृतीयाचतुर्थ्योश्चानुष्टुप् छन्दांसि ॥

सं सं स्रवन्तु सिन्धवः सं वाताः सं पतत्रिणः।
इमं यज्ञं प्रदिवो मे जुषन्तां संस्राव्येण हविषा जुहोमि ॥१॥

सम्। सम्। स्रवन्तु। सिन्धवः। सम्। वाताः। सम्। पतत्रिणः।
इमम्। यज्ञम्। प्रऽदिवः। मे। जुषन्ताम्। सम्ऽस्राव्येण। हविषा।
जुहोमि ॥ १ ॥

## Yama

**I.14.1** I have taken her riches (bhāga) as well as her reputation, as one takes a wreath from a tree. Like a big rooted tree (or a hill with big base), let her stay with her parents for a while.

**I.14.2** This maiden, O king, is your bride.O ordainer, now let her behave (enjoy) so. May she be bound to her mother's home, or to that of brothers, or to that of her father's.

**I.14.3** O prince, this maiden would keep the traditions of your family. We give her to you wholly and fully. Let her stay with her parents for a while, till her head is dressed and decorated.

**I.14.4** With the knowledge of family traditions, domestic customs and with an acquaintance with domestic cures and medicines, I bind your fortune as the sisters pack their valuables secure in an attache (or basket).

## Sindhu etc.–Rivers

**I.15.1** May the rivers flow to meet together, together the winds and also the birds together. May the excellent divine persons come to this sacrifice of mine. I hereby perform a sacrifice of confluence. (i.e.with a confluent oblation).

इहैव हवमा यात म इह संस्रावणा उतेमं वर्धयता गिरः ।
इहैतु सर्वो यः पशुरस्मिन्तिष्ठतु या रयिः ॥२॥
ये नदीनां संस्रवन्त्युत्सासः सदमक्षिताः । तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि ॥३॥
ये सर्पिषः संस्रवन्ति क्षीरस्य चोदकस्य च । तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि ॥४॥

इह। एव। हवम्। आ। यात। मे। इह। सम्ऽस्रावणाः। उत। इमम्। वर्धयत। गिरः।
इह। आ। एतु। सर्वः। यः। पशुः। अस्मिन्। तिष्ठतु। या। रयिः ॥ २ ॥
ये। नदीनाम्। सम्ऽस्रवन्ति। उत्सासः। सदम्। अक्षिताः।
तेभिः। मे। सर्वैः। सम्ऽस्रावैः। धनम्। सम्। स्रावयामसि ॥ ३ ॥
ये। सर्पिषः। सम्ऽस्रवन्ति। क्षीरस्य। च। उदकस्य। च।
तेभिः। मे। सर्वैः। सम्ऽस्रावैः। धनम्। सम्। स्रावयामसि ॥ ४ ॥

## ( १६ ) षोडशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य चातन ऋषिः। मन्त्रोक्ता अग्नीन्द्रवरुणा देवताः। (१-३) प्रथमादित्र्यृचस्यानुष्टुप्, (४) चतुर्थ्याश्च ककुम्मत्यनुष्टुप् छन्दसी ॥

येऽमावास्यां३ रात्रिमुदस्थुर्व्राजमत्रिणः ।
अग्निस्तुरीयो यातुहा सो अस्मभ्यमधि ब्रवत् ॥१॥
सीसायाध्याह वरुणः सीसायाग्निरुपावति ।
सीसं म इन्द्रः प्रायच्छत्तदङ्ग यातुचातनम् ॥२॥
इदं विष्कन्धं सहत इदं बाधते अत्रिणः ।
अनेन विश्वा ससहे या जातानि पिशाच्याः ॥३॥

ये। अमाऽवास्या३म्। रात्रिम्। उत्ऽअस्थुः। व्राजम्। अत्रिणः।
अग्निः। तुरीयः। यातुऽहा। सः। अस्मभ्यम्। अधि। ब्रवत् ॥ १ ॥
सीसाय। अधि। आह। वरुणः। सीसाय। अग्निः। उप। अवति।
सीसम्। मे। इन्द्रः। प्र। अयच्छत्। तत्। अङ्ग। यातुऽचातनम् ॥ २ ॥
इदम्। विऽस्कन्धम्। सहते। इदम्। बाधते। अत्रिणः।
अनेन। विश्वा। ससहे। या। जातानि। पिशाच्याः ॥ ३ ॥

**I.15.2** Do come to this sacrifice of mine just here.O promoters of organization, good speakers, give encouragement to it. Let every beast come here. Whatever is wealth, let all wealth stay with the sacrificer.

**I.15.3** The fountains of streams that flow to meet together unexhausted for ever, with all those confluent streams, may you make riches flow converging towards me.

**I.15.4** The streams of melted butter, of milk, and of water flow to meet together, with all those confluent streams may you make riches flow converging towards me.

### Agni

**I.16.1** About the vagabonds, who invade our hamlet during the night of new moon, let the powerful leader Agni, the fourth one, the destroyer of robbers, inform us before hand.

### Varuṇa, Agni and Indra

**I.16.2** The venerable Lord (Varuṇa) has said about sīsa (a metal). The adorable Lord (Agni) approves the use of lead. The resplendent Lord (Indra) has given lead (the metal) to me. O dear one, that lead is the dispeller of robbers.

### Sisam-Lead

**I.16.3** This (lead) stands against all disturbances. This keeps in check the vagrants. With this I resist all those who are born as blood suckers.

यदि नो गां हंसि यद्यश्वं यदि पूरुषम् ।
तं त्वा सीसेन विध्यामो यथा नोसो अवीरहा ॥४॥

---

यदि । नः । गाम् । हंसि । यदि । अश्वम् । यदि । पूरुषम् ।
तम् । त्वा । सीसेन । विध्यामः । यथा । नः । असः । अवीरऽहा ॥ ४ ॥

( १७ ) सप्तदशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्ता लोहितवाससः । यं.।पंतो देवताः । (१) प्रथमर्चो भुरिगनुष्टुप्, (२-३) द्वितीयातृतीययोरनुष्टुप्, (४) चतुर्थ्याश्च त्रिपदार्षी गायत्री छन्दांसि ॥

अमूर्या यन्ति योषितो हिरा लोहितवाससः । अभ्रातर इव जामयस्तिष्ठन्तु हतवर्चसः ॥१॥
तिष्ठावरे तिष्ठ पर उत त्वं तिष्ठ मध्यमे ।
कनिष्ठिका च तिष्ठति तिष्ठादिद्धमनिर्मही ॥२॥
शतस्य धमनीनां सहस्रस्य हिराणाम् ।
अस्थुरिन्मध्यमा इमाः साकमन्ता अरंसत ॥३॥
परि वः सिकतावती धनूर्बृहत्यक्रमीत् । तिष्ठतेलयता सु कम् ॥४॥

अमूः । याः । यन्ति । योषितः । हिराः । लोहितऽवाससः ।
अभ्रातरःऽइव । जामयः । तिष्ठन्तु । हतऽवर्चसः ॥ १ ॥
तिष्ठ । अवरे । तिष्ठ । परे । उत । त्वम् । तिष्ठ । मध्यमे ।
कनिष्ठिका । च । तिष्ठति । तिष्ठात् । इत् । धमनिः । मही ॥ २ ॥
शतस्य । धमनीनाम् । सहस्रस्य । हिराणाम् ।
अस्थुः । इत् । मध्यमाः । इमाः । साकम् । अन्ताः । अरंसत ॥ ३ ॥
परि । वः । सिकतावती । धनूः । बृहती । अक्रमीत् ।
तिष्ठत । इलयत । सु । कम् ॥ ४ ॥

**I.16.4** If you kill our cow, our horse or our man, we shall pierce you with lead, so that you may no more be killer of our brave men.

## Yoṣitaḥ-Dhamani-Artery

**I.17.1** Let these ladies, who go around clad in blood-red robes, the veins, stand still-devoid of vigour, like brotherless sisters.

**I.17.2** O you stop the lower one, O you stop the upper one, and O you the middle one, let you also stop. The smallest has stopped, let the large (great) artery (dhamani) also stop forsooth

**I.17.3** Amidst hundreds of the arteries and thousands of the veins these medium ones have stopped still and with it their ends have become joined (and they thus vest together).

**I.17.4** A large surface (dhanūḥ) of granules has come up around you. Let you keep quiet and rest in happiness.

### ( १८ ) अष्टादशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य द्रविणोदा ऋषिः । विनायको देवता । (१) प्रथमर्च उपरिष्टाद्विराड्बृहती, (२) द्वितीयाया निचृज्जगती, (३) तृतीयाया विराडास्तारपङ्क्तिस्त्रिष्टुप्, (४) चतुर्थ्याश्चानुष्टुप् छन्दांसि ॥

निर्लक्ष्म्यं॑ ललाम्यं१ निररातिं सुवामसि ।
अथ या भद्रा तानि नः प्रजाया अरातिं नयामसि ॥१॥
निररणिं सविता साविषक्पदोर्निर्हस्तयोर्वरुणो मित्रो अर्यमा ।
निरस्मभ्यमनुमती रराणा प्रेमां देवा असाविषुः सौभगाय ॥२॥
यत्त आत्मनि तन्वां॑ घोरमस्ति यद्वा केशेषु प्रतिचक्षणे वा ।
सर्वं तद्वाचाप हन्मो वयं देवस्त्वा सविता सूदयतु ॥३॥
रिश्यपदीं वृषदतीं गोषेधां विधमामुत ।
विलीढ्यं॑ ललाम्यं१ ता अस्मन्नाशयामसि ॥४॥

निः । लक्ष्म्यम् । ललाम्यम् । निः । अरातिम् । सुवामसि ।
अथ । या । भद्रा । तानि । नः । प्रऽजायै । अरातिम् । नयामसि ॥ १ ॥
निः । अरणिम् । सविता । साविषक् । पदोः । निः । हस्तयोः । वरुणः । मित्रः । अर्यमा ।
निः । अस्मभ्यम् । अनुमतिः । रराणा । प्र । इमाम् । देवाः । असाविषुः । सौभगाय ॥ २ ॥
यत् । ते । आत्मनि । तन्वाम् । घोरम् । अस्ति । यत् । वा । केशेषु । प्रतिऽचक्षणे । वा ।
सर्वम् । तत् । वाचा । अप । हन्मः । वयम् । देवः । त्वा । सविता । सूदयतु ॥ ३ ॥
रिश्यऽपदीम् । वृषऽदतीम् । गोऽसेधाम् । विऽधमाम् । उत ।
विऽलीढ्यम् । ललाम्यम् । ताः । अस्मत् । नाशयामसि ॥ ४ ॥

### ( १९ ) एकोनविंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । (१) प्रथमर्च इन्द्रः, (२) द्वितीयाया मनुष्येषवः, (३) तृतीयाया रुद्रः, (४) चतुर्थ्याश्च विश्वे देवा देवताः । (१, ४) प्रथमाचतुर्थ्योरनुष्टुप्, (२) द्वितीयायाः पुरस्ताद्बृहती, (३) तृतीयायाश्च पथ्यापङ्क्तिश्छन्दांसि ॥

मा नो विदन्विव्याधिनो मो अभिव्याधिनो विदन् ।
आराच्छरव्या॑ अस्मद्विषूचीरिन्द्र पातय ॥१॥

मा । नः । विदन् । विऽव्याधिनः । मो इति । अभिऽव्याधिनः । विदन् ।
आरात् । शरव्याः । अस्मत् । विषूचीः । इन्द्र । पातय ॥ १ ॥

## Savitṛ-Impeller etc.

**I.18.1** We remove the deformity marks disgracing beauty and drive malignity away. There-after we put in the marks full of grace and in this way we keep the malignity off our progeny.

**I.18.2** The creator Lord (Savitṛ) has removed the pains out of her feet. The venerable Lord (Varuṇa), the friendly Lord (Mitra), and the Lord of justice (Aryaman) have removed the pains out of her hands. The bounteous favour (Anumatī) has sent her out to us. The enlightened one (devāḥ) have urged her to marital bliss.

**I.18.3** Whatever is unpleasing (frightening) in your self, in your body, or in your hair or in your looks, all that we remove with our words. May the divine creator Lord guide you aright.

**I.18.4** The antelope-foot, the bull-tooth, the cow terrifier the blowing, the large licking lip and the pallid deformity, all this, we remove from us.

## Indra

**I.19.1** May the sharp piercing arrows not find us, nor those piercing from all sides. May you, O resplendent Lord, make the volleys of arrows fall scattered away from us on all the sides.

विष्वञ्चो अस्मच्छरवः पतन्तु ये अस्ता ये चास्याः ।
दैवीर्मनुष्येषवो ममामित्रान्वि विध्यत ॥२॥
यो नः स्वो यो अरणः सजात उत निष्ट्यो यो अस्माँ अभिदासति ।
रुद्रः शरव्ययैतान्ममामित्रान्वि विध्यतु ॥३॥
यः सपत्नो योऽसपत्नो यश्च द्विषञ्छपाति नः ।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ॥४॥

विष्वञ्चः । अस्मत् । शरवः । पतन्तु । ये । अस्ताः । ये । च । आस्याः ।
दैवीः । मनुष्यऽइषवः । मम । अमित्रान् । वि । विध्यत ॥ २ ॥
यः । नः । स्वः । यः । अरणः । सऽजातः । उत । निष्ट्यः । यः । अस्मान् ।
अभिऽदासति ।
रुद्रः । शरव्यया । एतान् । मम । अमित्रान् । वि । विध्यतु ॥ ३ ॥
यः । सऽपत्नः । यः । असपत्नः । यः । च । द्विषन् । शपाति । नः ।
देवाः । तम् । सर्वे । धूर्वन्तु । ब्रह्म । वर्म । मम । अन्तरम् ॥ ४ ॥

( २० ) विंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । (१) प्रथमर्चः सोमो मरुतश्च, (२) द्वितीयाया मित्रावरुणौ, (३) तृतीयाया वरुणः, (४) चतुर्थ्याश्चेन्द्रो देवताः । (१) प्रथमायास्त्रिष्टुप् , (२-४) द्वितीयादितृचस्य चानुष्टुप् छन्दसी ॥

अदारसृद्भवतु देव सोमास्मिन्यज्ञे मरुतो मृडता नः ।
मा नो विददभिभा मो अशस्तिर्मा नो विदद्वृजिना द्वेष्या या ॥१॥
यो अद्य सेन्यो वधोघायूनामुदीरते ।
युवं तं मित्रावरुणावस्मद्यावयतं परि ॥२॥

अदारऽसृत् । भवतु । देव । सोम । अस्मिन् । यज्ञे । मरुतः । मृडत । नः ।
मा । नः । विदत् । अभिऽभाः । मो इति । अशस्तिः । मा । नः । विदत् । वृजिना । द्वेष्या
या ॥ १ ॥
यः । अद्य । सेन्यः । वधः । अघऽयूनाम् । उत्ऽईरते ।
युवम् । तम् । मित्रावरुणौ । अस्मत् । यवयतम् । परि ॥ २ ॥

## Indra and Man

**I.19.2** Diverted away from us may fall the arrows, that have been shot or are yet to be shot at us. O divine arrows of men, may you pierce my enemies through and through.

## Rudra

**I.19.3** Be he our own or a stranger, be he one of our kinsmen, or an outsider, if he tries to enslave us, may the terrible punisher pierce these enemies of mine with a volley of arrows.

## Devāḥ

**I.19.4** Be he an enemy, or not an enemy, if he reviles us maliciously, may all the enlightened ones destroy him. Prayer is my inner armour, the closest mail.

## Soma and Marut

**I.20.1** O blissful Lord, may you be gliding without causing injury. May the cloud-bearing winds delight us at this sacrifice. May not a calamity reach us, nor a revilement (vilification). May not a malicious sin detect and find us out.

## Mitra and Varuṇa

**I.20.2** Slaughter of the sinfuls, (The deadly weapon), that is going to be (flies today), the powerful missile of the wicked, may you, the enemies may you, the friendly and venerable Lord, keep far away from us.

इतश्च यदमुतश्च यद्वधं वरुण यावय ।
वि महच्छर्म यच्छ वरीयो यावया वधम् ॥३॥
शास इत्था महाँ अस्यमित्रसाहो अस्तृतः ।
न यस्य हन्यते सखा न जीयते कदा चन ॥४॥

इतः । च । यत् । अमुतः । च । यत् । वधम् । वरुण । यवय ।
वि । महत् । शर्म । यच्छ । वरीयः । यवय । वधम् ॥ ३ ॥

शासः । इत्था । महान् । असि । अमित्रऽसहः । अस्तृतः ।
न । यस्य । हन्यते । सखा । न । जीयते । कदा । चन ॥ ४ ॥

( २१ ) एकविंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । इन्द्रो देवता । अनुष्टुप् छन्दः ॥

स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः सोमपा अभयङ्करः ॥१॥
वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
अधमं गमया तमो यो अस्माँ अभिदासति ॥२॥
वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः ॥३॥
अपेन्द्र द्विषतो मनोप जिज्यासतो वधम् ।
वि महच्छर्म यच्छ वरीयो यावया वधम् ॥४॥

स्वस्तिऽदाः । विशाम् । पतिः । वृत्रऽहा । विऽमृधः । वशी ।
वृषा । इन्द्रः । पुरः । एतु । नः । सोमऽपाः । अभयम्ऽकरः ॥ १ ॥

वि । नः । इन्द्र । मृधः । जहि । नीचा । यच्छ । पृतन्यतः ।
अधमम् । गमय । तमः । यः । अस्मान् । अभिऽदासति ॥ २ ॥

वि । रक्षः । वि । मृधः । जहि । वि । वृत्रस्य । हनू इति । रुज ।
वि । मन्युम् । इन्द्र । वृत्रऽहन् । अमित्रस्य । अभिऽदासतः ॥ ३ ॥

अप । इन्द्र । द्विषतः । मनः । अप । जिज्यासतः । वधम् ।
वि । महत् । शर्म । यच्छ । वरीयः । यवय । वधम् ॥ ४ ॥

## Varuṇa

**I.20.3** Murderous weapon, that comes from this side and that comes from the other side, O venerable Lord, may turn that away. May you bestow great happiness and protection on us and turn the deadly weapon far away.

## Indra

**I.20.4** Verily, you are the mighty ruler, conqueror of enemies and himself unconquered, whose friend is never slain and never subdued.

## Indra

**I.21.1** May the resplendent Lord come to us and be with us; he is the granter of prosperity, the Lord of men, the slayer of dark forces, the warrior, the subduer, the showerer, the cherisher of divine love and the assurer of safety. (Also Ṛg. X.152.2)

**I.21.2** O resplendent Lord, destroy the evil-spirited persons of wickedness, and also the enemies; tear asunder jaws of Nescience, the darkness. O resplendent ones, the subduer of Nescience, baffle the wrath of our adversaries who always threaten us. (Also Ṛg. X.152.3)

**I.21.3** O resplendent Lord, destroy our enemies; humble those who are in array against us; send him to the deep dungeon who seeks to harm us. (Also Ṛg. X.152.4)

**I.21.4** May you frustrate the purpose of him who hates us, deprive him of his weapon who seeks to overpower us, grant us full security against his fury and wrath, and ward off his weapon. (Also Ṛg. X.152.5)

( २२ ) द्वाविंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । सूर्यो हरिमा हृद्रोगश्च देवताः । अनुष्टुप् छन्दः ॥

अनु सूर्यमुदयतां हृद्द्योतो हरिमा च ते ।
गो रोहितस्य वर्णेन तेन त्वा परि दध्मसि ॥१॥
परि त्वा रोहितैर्वर्णैर्दीर्घायुत्वाय दध्मसि ।
यथायमरपा असदथो अहरितो भुवत् ॥२॥
या रोहिणीर्देवत्या३ गावो या उत रोहिणीः ।
रूपंरूपं वयोवयस्ताभिष्ट्वा परि दध्मसि ॥३॥
सुकेषु ते हरिमाणं रोपणाकासु दध्मसि ।
अथो हारिद्रवेषु ते हरिमाणं नि दध्मसि ॥४॥

अनु । सूर्यम् । उत् । अयताम् । हृत्ऽद्योतः । हरिमा । च । ते ।
गोः । रोहितस्य । वर्णेन । तेन । त्वा । परि । दध्मसि ॥ १ ॥
परि । त्वा । रोहितैः । वर्णैः । दीर्घायुऽत्वाय । दध्मसि ।
यथा । अयम् । अरपाः । असत् । अथो इति । अहरितः । भुवत् ॥ २ ॥
याः । रोहिणीः । देवत्याः । गावः । याः । उत । रोहिणीः ।
रूपम्ऽरूपम् । वयःऽवयः । ताभिः । त्वा । परि । दध्मसि ॥ ३ ॥
शुकेषु । ते । हरिमाणम् । रोपणाकासु । दध्मसि ।
अथो इति । हारिद्रवेषु । ते । हरिमाणम् । नि । दध्मसि ॥ ४ ॥

( २३ ) त्रयोविंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । असिक्नीवनस्पतिर्देवता । अनुष्टुप् छन्दः ॥

नक्तञ्जातास्योषधे रामे कृष्णे असिक्नि च ।
इदं रजनि रजय किलासं पलितं च यत् ॥१॥

नक्तम्ऽजाता । असि । ओषधे । रामे । कृष्णे । असिक्नि । च ।
इदम् । रजनि । रजय । किलासम् । पलितम् । च । यत् ॥१॥

## Sūrya and Cure for Jaundice

**I.22.1** May your sore-sickness and yellowness disappear when exposed to the Sun. We have enclosed and surrounded you with the ruddy radiations of the Sun

**I.22.2** With ruddy colours we enclose and surround you for a long life, so that this man may be cured of the disease and become un- yellowed, free from Jaundice (harimāṇam).

**I.22.3** Whatever are the divine red rays or the cows are of ruddy colour, with various forms and with various potencies; with them we enclose and surround you.

**I.22.4** May the pale-green hue, the sign of weakness of my body, be transferred to enrich the beauty of parrots and the freshness of herbs. (Also Ṛg. I.50.12).

## Vanaspati-Ramā, Kṛiṣ and Asiknī

**I.23.1** Night-born you are O herb:O dusky (rāme), O dark kṛṣṇe, and black in hue (asiknī), O Rajanī, the colour-imparting hue, please recolour the ashy spots, the leprosy or leucoderma. (dusky-rāma, dark-kṛṣṇa and black in hue-asiknī.).

किलासं च पलितं च निरितो नाशया पृषत् ।
आ त्वा स्वो विशतां वर्णः परा शुक्लानि पातय ॥२॥
असितं ते प्रलयनमास्थानमसितं तव ।
असिक्न्यस्योषधे निरितो नाशया पृषत् ॥३॥
अस्थिजस्य किलासस्य तनूजस्य च यत्त्वचि ।
दूष्या कृतस्य ब्रह्मणा लक्ष्म श्वेतमनीनशम् ॥४॥

किलासम् । च । पलितम् । च । निः । इतः । नाशय । पृषत् ।
आ । त्वा । स्वः । विशताम् । वर्णः । परा । शुक्लानि । पातय ॥ २ ॥
असितम् । ते । प्रऽलयनम् । आऽस्थानम् । असितम् । तव ।
असिक्नी । असि । ओषधे । निः । इतः । नाशय । पृषत् ॥ ३ ॥
अस्थिऽजस्य । किलासस्य । तनूऽजस्य । च । यत् । त्वचि ।
दूष्या । कृतस्य । ब्रह्मणा । लक्ष्म । श्वेतम् । अनीनशम् ॥ ४ ॥

( २४ ) चतुर्विंशं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आसुरीवनस्पतिर्देवता । (१, ३–४) प्रथमातृतीयाचतुर्थीना-मृचामनुष्टुप् , (२) द्वितीयायाश्च निचृत्पथ्यापङ्क्तिश्छन्दसी ॥

सुपर्णो जातः प्रथमस्तस्य त्वं पित्तमासिथ ।
तदासुरी युधा जिता रूपं चक्रे वनस्पतीन् ॥१॥
आसुरी चक्रे प्रथमेदं किलासभेषजमिदं किलासनाशनम् ।
अनीनशत्किलासं सरूपामकरत्त्वचम् ॥२॥
सरूपा नाम ते माता सरूपो नाम ते पिता ।
सरूपकृत्त्वमोषधे सा सरूपमिदं कृधि ॥३॥

सुऽपर्णः । जातः । प्रथमः । तस्य । त्वम् । पित्तम् । आसिथ ।
तत् । आसुरी । युधा । जिता । रूपम् । चक्रे । वनस्पतीन् ॥ १ ॥
आसुरी । चक्रे । प्रथमा । इदम् । किलासऽभेषजम् । इदम् । किलासऽनाशनम् ।
अनीनशत् । किलासम् । सऽरूपाम् । अकरत् । त्वचम् ॥ २ ॥
सऽरूपा । नाम । ते । माता । सऽरूपः । नाम । ते । पिता ।
सरूपऽकृत् । त्वम् । ओषधे । सा । सऽरूपम् । इदम् । कृधि ॥ ३ ॥

**I.23.2** May you remove from this place the leprosy patch and the white ash-coloured one; make the spots disappear. May your own colour come to you and let you throw far away his white specks.

**I.23.3** Dark is your place of repose and dark your dwelling. O herb, you yourself are dusky. May you make every spot disappear from this place.

**I.23.4** With my excellent knowledge and experience (as a physician), I have chased away the spots of bone born leprosy and those of the body-born, which are caused on the skin by infections.

## Asurī Vanaspati-Against Leprosy

**I.24.1** The Sun, the strong winged bird (suparṇa) was born first. Its gall, the pitta, you have received. The biotic force, gained by the sustained experiments and observations, gave that form to the plants.

**I.24.2** First of all, the biotic experiments led to the discovery of the remedy the leprosy. It is destroyer of leprosy. We have again and again confirmed it. This destroys leprosy and has made the skin of uniform natural colour.

**I.24.3** Of uniform colour is your mother and of uniform colour is your father. O medicinal herb, you make the skin uniform. May you make this man of uniform appearance.

शामा सरूपङ्करणी पृथिव्या अध्युद्भृता ।
इदमू षु प्र साधय पुना रूपाणि कल्पय ॥४॥

श्यामा । सरूपम्ऽकरणी । पृथिव्याः । अधि । उत्ऽभृता ।
इदम् । ऊं इति । सु । प्र । साधय । पुनः । रूपाणि । कल्पय ॥ ४ ॥

( २५ ) पञ्चविंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । यक्ष्मनाशनाग्निर्देवता । (१) प्रथमर्चस्त्रिष्टुप्, (२-३) द्वितीयातृतीययोर्विराड्गर्भा त्रिष्टुप्, (४) चतुर्थ्याश्च पुरोऽनुष्टुप् त्रिष्टुप् छन्दांसि ॥

यदग्निरापो अदहत्प्रविश्य यत्राकृण्वन्धर्मधृतो नमांसि ।
तत्र त आहुः परमं जनित्रं स नः संविद्वान्परि वृङ्ग्धि तक्मन् ॥१॥
यद्यर्चिर्यदि वासि शोचिः शकल्येषि यदि वा ते जनित्रम् ।
हूडुर्नामासि हरितस्य देव स नः संविद्वान्परि वृङ्ग्धि तक्मन् ॥२॥
यदि शोको यदि वाभिशोको यदि वा राज्ञो वरुणस्यासि पुत्रः ।
हूडुर्नामासि हरितस्य देव स नः संविद्वान्परि वृङ्ग्धि तक्मन् ॥३॥
नमः शीताय तक्मने नमो रूराय शोचिषे कृणोमि ।
यो अन्येद्युरुभयद्युरभ्येति तृतीयकाय नमो अस्तु तक्मने ॥४॥

यत् । अग्निः । आपः । अदहत् । प्रऽविश्य । यत्र । अकृण्वन् । धर्मऽधृतः । नमांसि ।
तत्र । ते । आहुः । परमम् । जनित्रम् । सः । नः । समऽविद्वान् । परि ।
वृङ्ग्धि । तक्मन् ॥ १ ॥

यदि । अर्चिः । यदि । वा । असि । शोचिः । शकल्यऽएषि । यदि । वा । ते ।
जनित्रम् ।
हूडुः । नाम । असि । हरितस्य । देव । सः । नः । समऽविद्वान् । परि । वृङ्ग्धि ।
तक्मन् ॥ २ ॥

यदि । शोकः । यदि । वा । अभिऽशोकः । यदि । वा । राज्ञः । वरुणस्य ।
असि । पुत्रः ।
हूडुः । नाम । असि । हरितस्य । देव । सः । नः । समऽविद्वान् । परि । वृङ्ग्धि ।
तक्मन् ॥ ३ ॥

नमः । शीताय । तक्मने । नमः । रूराय । शोचिषे । कृणोमि ।
यः । अन्येद्युः । उभयद्युः । अभिऽएति । तृतीयकाय । नमः । अस्तु ।
तक्मने ॥ ४ ॥

**I.24.4** This herb is dark-coloured. This makes the skin of uniform colour. This herb has been pulled out of earth. O herb, may you accomplish this work efficiently and restore (to man his) previous (original) natural appearances.

## Agni-Cure of Disease

**I.25.1** Entering which the fire burns up the waters, and where the scrupulous performers of duty pay homage (i.e.the vital breath), that they say, is your highest real birth place. Appreciating this, O fever, may you spare us.

**I.25.2** If you are the burning or if you are the heat, or if your cause of birth shows its effect throughout the whole body, then, you are called (ramp or spasm) (hṛudu). O divine one, causing jaundice (yellowness). Appreciating this, O fever may you spare us.

**I.25.3** If you are paining or if your are aching all over the body, or if you are the son of the venerable Lord, the sovereign, then you are called cramp and spasm (hṛdu) .O divine one, causing pallidness. Appreciating this, O fever, may you spare us.

**I.25.4** Homage be to the chilling fever (that comes with shiver). I pay homage to the dry heat, homage be to the fever that comes on alternate days (anyedyu), to the one that comes on both days (ubhayedyu), and the one, that comes every third day (tṛtīyaka).

## ( २६ ) षड्विंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । इन्द्रादयो मन्त्रोक्ता देवताः । (१, ३) प्रथमातृतीययोर्ऋचोर्गायत्री, (२) द्वितीयाया एकावसाना त्रिपदा साम्नी त्रिष्टुप्, (४) चतुर्थ्याश्चैकावसाना पादनिचृद्गायत्री छन्दांसि ॥

आरे३सावस्मदस्तु हेतिर्देवासो असत् । आरे अश्मा यमस्यथ ॥१॥
सखासावस्मभ्यमस्तु रातिः सखेन्द्रो भगः सविता चित्रराधाः ॥२॥
यूयं नः प्रवतो नपान्मरुतः सूर्यत्वचसः । शर्म यच्छाथ सप्रथाः ॥३॥
सुषूदत मृडत मृडया नस्तनूभ्यो मयस्तोकेभ्यस्कृधि ॥४॥

आरे । असौ । अस्मत् । अस्तु । हेतिः । देवासः । असत् ।
आरे । अश्मा । यम् । अस्यथ ॥ १ ॥

सखा । असा । अस्मभ्यम् । अस्तु । रातिः । सखा । इन्द्रः । भगः । सविता ।
चित्रऽराधाः ॥ २ ॥

युयम् । नः । प्रऽवतः । नपात् । मरुतः । सूर्यऽत्वचसः ।
शर्म । यच्छाथ । सऽप्रथाः ॥ ३ ॥

सुसुदत । मृडत । मृडय । नः । तनूभ्यः । मयः । तोकेभ्यः । कृधि ॥ ४ ॥

## ( २७ ) सप्तविंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । चन्द्रमा इन्द्राणी वा देवता । (१) प्रथमर्चः पथ्यापङ्क्तिः, (२-४) द्वितीयादितृचस्य चानुष्टुप् छन्दसी ॥

अमूः पारे पृदाक्वस्त्रिषप्ता निर्जरायवः ।
तासां जरायुभिर्वयमक्ष्या३वपि व्ययामस्यघायोः परिपन्थिनः ॥१॥
विषूच्येतु कृन्तती पिनाकमिव बिभ्रती ।
विष्वक्पुनर्भुवा मनोसमृद्धा अघायवः ॥२॥

अमूः । पारे । पृदाक्वः । त्रिऽसप्ताः । निःऽजरायवः ।
तासाम् । जरायुऽभिः । वयम् । अक्ष्यौ । अपि । व्ययामसि । अघऽयोः । परिऽपन्थिनः ॥ १ ॥
विषूची । एतु । कृन्तती । पिनाकम्ऽइव । बिभ्रती ।
विष्वक् । पुनःऽभुवाः । मनः । असम्ऽऋद्धाः । अघऽयवः ॥ २ ॥

## Indra and Others

**I.26.1** O bounties of Nature, may that weapon (lightning) remain far from us and far the hail-stones, that you hurl.

**I.26.2** May that liberal donor, be our companion; may the resplendent Lord, the Lord of prosperity and the inspirer Lord of wonderful wealth be our friend.

**I.26.3** O cloud-bearing winds, children of heavenly heights, with sun-like skins, may you grant us protection and happiness ever spreading.

**I.26.4** May you give us good shelter. Be gracious and bestow happiness on our bodies. May you grant delight to our offsprings.

## Indrāṇī

**I.27.1** There on the other bank are thrice-seven (triṣaptāḥ) she pythons, just having cast their sloughs. With their sloughs we cover the eyes of the evil-intending highway robber.

**I.27.2** Let the army carrying large bows, move in all the directions cutting down the enemy and raising the morale of our people all around.

न बहवः समशकन्नार्भका अभि दाधृषुः ।
वेणोरद्गा इवाभितोऽसमृद्धा अघायवः ॥३॥
प्रेतं पादौ प्र स्फुरतं वहतं पृणतो गृहान् ।
इन्द्राण्येतु प्रथमाजीतामुषिता पुरः ॥४॥

न । बहवः । सम् । अशकन् । न । अर्भकाः । अभि । दधृषुः ।
वेणोः । अद्गाःऽइव । अभितः । असम्ऽऋद्धाः । अघऽयवः ॥ ३ ॥
प्र । इतम् । पादौ । प्र । स्फुरतम् । वहतम् । पृणतः । गृहान् ।
इन्द्राणी । एतु । प्रथमा । अजीता । अमुषिता । पुरः ॥ ४ ॥

( २८ ) अष्टाविंशं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्य चातन ऋषिः । (१, २) प्रथमर्चो द्वितीयायाः पूर्वार्द्धस्य चाग्निः, (२, ३–४) द्वितीयाया उत्तरार्द्धस्य तृतीयाचतुर्थ्योश्च यातुधान्यो देवताः । (१–२) प्रथमाद्वितीययोरनुष्टुप्, (३) तृतीयाया विराट् पथ्याबृहती, (४) चतुर्थ्याश्च पथ्यापङ्क्तिश्छन्दांसि ॥

उप प्रागाद्देवो अग्नी रक्षोहामीवचातनः ।
दहन्नप द्वयाविनो यातुधानान्किमीदिनः ॥१॥
प्रति दह यातुधानान्प्रति देव किमीदिनः ।
प्रतीचीः कृष्णवर्तने सं दह यातुधान्यः ॥२॥
या शशाप शपनेन याघं मूरमादधे ।
या रसस्य हरणाय जातमारेभे तोकमत्तु सा ॥३॥
पुत्रमत्तु यातुधानीः स्वसारमुत नप्त्यम् ।
अधा मिथो विकेश्यो३ वि घ्नतां यातुधान्यो३ वि तृह्यन्तामराय्यः ॥४

उप । प्र । अगात् । देवः । अग्निः । रक्षःऽहा । अमीवऽचातनः ।
दहन् । अप । द्वयाविनः । यातुऽधानान् । किमीदिनः ॥ १ ॥
प्रति । दह । यातुऽधानान् । प्रति । देव । किमीदिनः ।
प्रतीचीः । कृष्णऽवर्तने । सम् । दह । यातुऽधान्यः ॥ २ ॥
या । शशाप । शपनेन । या । अघम् । मूरम् । आऽदधे ।
या । रसस्य । हरणाय । जातम् । आऽरेभे । तोकम् । अत्तु । सा ॥ ३ ॥
पुत्रम् । अत्तु । यातुऽधानीः । स्वसारम् । उत । नप्त्यम् ।
अध । मिथः । विऽकेश्यः । वि । घ्नताम् । यातुऽधान्यः ।
वि । तृह्यन्ताम् । अराय्यः ॥ ४ ॥

**I.27.3** Many were not able to withstand the attack. They could not even take away their children with them. Like the shoots of bamboo they were finished from all sides. Those with evil intentions never prosper.

**I.27.4** Move forward, O both our feet. Be quick. Hurry up. Carry the liberal donors to their houses. Let the resplendent lady, unconquered and unrobbed, move in the fore-front as leader.

## Agni

**I.28.1** The divine adorable Lord, the killer of pests and dispeller of disease, has come forth burning the double-dealers, the germs, sorcerers (Yātudhāna) and the vile infections away.

**I.28.2** O divine one, may you subdue the deceits, germs or infections and burn them up. O Lord of black trail, may you burn out the malicious ones thoroughly.

## Yātudhānī

**I.28.3** These malignant microbes have cursed(the patient) with cursings that has taken malignity as her root (mūra= mūla); that has seized our young babies to suck the blood. Let her devour her own child (tokam).

**I.28.4** May the bacteriophages (Yātudhānī) eat-up their own sons, sister and grand-children, may the hurried (vikeśyaḥ) mutually destroy (one another). May the parasites be shattered asunder.

( २९ ) एकोनत्रिंशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्य वसिष्ठ ऋषिः । ब्रह्मणस्पतिर्देवता । अनुष्टुप् छन्दः ॥

अभीवर्तेन मणिना येनेन्द्रो अभिवावृधे ।
तेनास्मान्ब्रह्मणस्पतेभि राष्ट्राय वर्धय ॥१॥
अभिवृत्य सपत्नानभि या नो अरातयः ।
अभि पृतन्यन्तं तिष्ठाभि यो नो दुरस्यति ॥२॥
अभि त्वा देवः सविताभि सोमो अवीवृधत् ।
अभि त्वा विश्वा भूतान्यभीवर्तो यथाससि ॥३॥
अभीवर्तो अभिभवः सपत्नक्षयणो मणिः ।
राष्ट्राय मह्यं बध्यतां सपत्नेभ्यः पराभुवे ॥४॥
उदसौ सूर्यो अगादुदिदं मामकं वचः ।
यथाहं शत्रुहोसान्यसपत्नः सपत्नहा ॥५॥
सपत्नक्षयणो वृषाभिराष्ट्रो विषासहिः ।
यथाहमेषां वीराणां विराजानि जनस्य च ॥६॥

अभिऽवर्तेन । मणिना । येन । इन्द्रः । अभिऽववृधे ।
तेन । अस्मान् । ब्रह्मणः । पते । अभि । राष्ट्राय । वर्धय ॥ १ ॥
अभिऽवृत्य । सऽपत्नान् । अभि । याः । नः । अरातयः ।
अभि । पृतन्यन्तम् । तिष्ठ । अभि । यः । नः । दुरस्यति ॥ २ ॥
अभि । त्वा । देवः । सविता । अभि । सोमः । अवीवृधत् ।
अभि । त्वा । विश्वा । भूतानि । अभिऽवर्तः । यथा । अससि ॥ ३ ॥
अभिऽवर्तः । अभिऽभवः । सपत्नऽक्षयणः । मणिः ।
राष्ट्राय । मह्यम् । बध्यताम् । सऽपत्नेभ्यः । पराऽभुवे ॥ ४ ॥
उत् । असौ । सूर्यः । अगात् । उत् । इदम् । मामकम् । वचः ।
यथा । अहम् । शत्रुऽहः । असानि । असपत्नः । सपत्नऽहा ॥ ॥
सपत्नऽक्षयणः । वृषा । अभिऽराष्ट्रः । विऽससहिः ।
यथा । अहम् । एषाम् । वीराणाम् । विऽराजानि । जनस्य । च ॥ ६ ॥

## Brahmaṇaspati-Abhīvarta-Maṇīḥ

**I.29.1** With the all conquering ampoule (maṇi), with which the sick patient (Indra) gains strength, O Lord of Sciences (knowledge), may you strengthen us for the sake of our nation.

**I.29.2** Conquering our rivals, conquering those enemies who do not pay our dues, and conquering those who invade us, may you defeat him who reviles us.

**I.29.3** The Divine Creator Lord has strengthened you and so has the Blissfull Lord. All the elements have strengthened you so that you have become all conquering.

**I.29.4** All-conquering, all-subduing, and the destroyer of rivals, let this muscle (of mine) be injected with the fluid from and ampoule. These vaccines are in our nations'interest. They are the cures against epidemic disasters.

**I.29.5** Lo, the Sun has gone up high and high has gone up this word (vācas) of mine, so that I may be slayer of enemies, slayer of rivals, no rival would be spared from my side.

**I.29.6** May I be destroyer of rivals, full of strength, conqueror of Nation and having sway over subjects, so that I may rule over these heroes (vīrān) or brave sons and the people.

### ( ३० ) त्रिंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः। विश्वे देवा देवताः। (१-२, ४) प्रथमाद्वितीया-चतुर्थीनामृचां त्रिष्टुप्, (३) तृतीयायाश्च शाक्वरगर्भा विराड् जगती छन्दसी ॥

विश्वे देवा वसवो रक्षतेममुतादित्या जागृत यूयमस्मिन् ।
मेमं सनाभिरुत वान्यनाभिर्मेमं प्रापत्पौरुषेयो वधो यः ॥१॥
ये वो देवाः पितरो ये च पुत्राः सचेतसो मे शृणुतेदमुक्तम् ।
सर्वेभ्यो वः परि ददाम्येतं स्वस्त्येनं जरसे वहाथ ॥२॥
ये देवा दिवि ष्ठ ये पृथिव्यां ये अन्तरिक्ष ओषधीषु पशुष्वप्स्वन्तः ।
ते कृणुत जरसमायुरस्मै शतमन्यान्परि वृणक्तु मृत्यून् ॥३॥
येषां प्रयाजा उत वानुयाजा हुतभागा अहुतादश्च देवाः ।
येषां वः पञ्च प्रदिशो विभक्तास्तान्वो अस्मै सत्रसदः कृणोमि ॥४॥

विश्वे । देवाः । वसवः । रक्षत । इमम् । उत । आदित्याः । जागृत । यूयम् । अस्मिन् ।
मा । इमम् । सऽनाभिः । उत । वा । अन्यऽनाभिः । मा । इमम् । प्र । आपत् । पौरुषेयः ।
वधः । यः ॥ १ ॥

ये । वः । देवाः । पितरः । ये । च । पुत्राः । सऽचेतसः । मे । शृणुत । इदम् । उक्तम् ।
सर्वेभ्यः । वः । परि । ददामि । एतम् । स्वस्ति । एनम् । जरसे । वहाथ ॥ २ ॥

ये । देवाः । दिवि । स्थ । ये । पृथिव्याम् । ये । अन्तरिक्षे । ओषधीषु । पशुषु । अप्ऽसु । अन्तः ।
ते । कृणुत । जरसम् । आयुः । अस्मै । शतम् । अन्यान् । परि । वृणक्तु । मृत्यून् ॥ ३ ॥

येषाम् । प्रऽयाजाः । उत । वा । अनुऽयाजाः । हुतऽभागाः । अहुतऽअदः । च । देवाः ।
येषाम् । वः । पञ्च । प्रऽदिशः । विऽभक्ताः । तान् । वः । अस्मै । सत्रऽसदः । कृणोमि ॥ ४ ॥

### ( ३१ ) एकत्रिंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः। आशापाला वास्तोष्पतयश्च देवताः। (१-२) प्रथमाद्वितीययो-र्ऋचोरनुष्टुप्, (३) तृतीयाया विराट् त्रिष्टुप्, (४) चतुर्थ्याश्च परानुष्टुप् त्रिष्टुप् छन्दांसि ॥

आशानामाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः ।
इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् ॥१॥

आशानाम् । आशाऽपालेभ्यः । चतुःऽभ्यः । अमृतेभ्यः ।
इदम् । भूतस्य । अधिऽअक्षेभ्यः । । विधेम । हविषा । वयम् ॥ १ ॥

## Viśve-devāḥ-All Bounties of Nature

**I.30.1** O Nature's all bounties, O heavenly planets may you offer protection to this man. O months (the Adityas= months), may you or stars keep a watchful eye on him. May no one, whether related or unrelated, bring to him death caused by human weapons.

**I.30.2** O enlightened ones, may those among you, who are fathers and who are sons, listen intently to these words uttered by me. I entrust this man wholly to your charge. Looking after him well carry him to the full span of life.

**I.30.3** O dear bounties of Nature, who are in heaven, who are on earth, who are in the midspace, in the herbs and in the cattle, may you extend the life of this man to his full old age. Let him get over the hundreds of other deaths.

**I.30.4** O enlightened ones, those of you whose share are the after-offerings, those who consume oblations and those who eat the food not offered as oblation, and those, among whom the five regions have been divided, all of you I make his companions at (assigned different) sessions.

## Āśāpātāḥ--Guardians of Quarters

**I.31.1** To the four immortal quarter-guards of the regions, the controllers of all the creation or existences, we offer our oblations.

य आशानामाशापालाश्चत्वार स्थन देवाः ।
ते नो निर्ऋत्याः पाशेभ्यो मुञ्चतांहसोअंहसः ॥२॥
अस्रामस्त्वा हविषा यजाम्यश्लोणस्त्वा घृतेन जुहोमि ।
य आशानामाशापालस्तुरीयो देवः स नः सुभूतमेह वक्षत् ॥३॥
स्वस्ति मात्र उत पित्रे नो अस्तु स्वस्ति गोभ्यो जगते पुरुषेभ्यः ।
विश्वं सुभूतं सुविदत्रं नो अस्तु ज्योगेव दृशेम सूर्यम् ॥४॥

ये । आशानाम् । आशाऽपालाः । चत्वारः । स्थन । देवाः ।
ते । नः । निःऽऋत्याः । पाशेभ्यः । मुञ्चत । अंहसःऽअंहसः ॥ २ ॥
अस्रामः । त्वा । हविषा । यजामि । अश्लोणः । त्वा । घृतेन । जुहोमि ।
यः । आशानाम् । आशाऽपालः । तुरीयः । देवः । सः । नः । सुऽभूतम् । आ । इह । वक्षत् ॥ ३ ॥
स्वस्ति । मात्रे । उत । पित्रे । नः । अस्तु । स्वस्ति । गोभ्यः । जगते ।
पुरुषेभ्यः ।
विश्वम् । सुऽभूतम् । सुऽविदत्रम् । नः । अस्तु । ज्योक् । एव । दृशेम । सूर्यम् ॥ ४ ॥

( ३२ ) द्वात्रिंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । द्यावापृथिव्यौ देवते । (१, ३-४) प्रथमा-तृतीयाचतुर्थीनामृचामनुष्टुप्, (२) द्वितीयायाश्च ककुम्मत्यनुष्टुप् छन्दसी ॥

इदं जनासो विदथ महद्ब्रह्म वदिष्यति ।
न तत्पृथिव्यां नो दिवि येन प्राणन्ति वीरुधः ॥१॥
अन्तरिक्ष आसां स्थाम श्रान्तसदामिव ।
आस्थानमस्य भूतस्य विदुष्टद्वेधसो न वा ॥२॥

इदम् । जनासः । विदथ । महत् । ब्रह्म । वदिष्यति ।
न । तत् । पृथिव्याम् । नो । इति । दिवि । येन । प्राणन्ति । वीरुधः ॥ १ ॥
अन्तरिक्षे । आसाम् । स्थाम । श्रान्तसदाम्ऽइव ।
आऽस्थानम् । अस्य । भूतस्य । विदुः । तत् । वेधसः । न । वा ॥ २ ॥

**I.31.2** May the four bounties of Nature, that are the quarter-guards of the regions, release us from the nooses of misery (perdition-Nirṛti) as well as from each and every sin.

**I.31.3** United I offer oblations to you. Unlamed I offer you oblations of melted butter. May that bounty of Nature, which is the fourth quarter-guard of the regions, bring well being to us.

**I.31.4** May it be well with our mother and father, well with our cows, animals and men. May all the creatures be good and benevolent to us.May we behold the Sun for long long years.

## Dyāvā--Pṛthivi-Cosmogony

**I.32.1** O men, let you listen and understand this.He will speak of the great spiritual knowledge. That, from which the plants draw their life, is neither on earth nor in the sky.

**I.32.2** The mid-space is their stop-over, like the one meant for the resting of the tired. The real station of all this creation, only the virtuous ones know or perhaps they also know not.

यद्रोदसी रेजमाने भूमिश्च निरतक्षतम् ।
आर्द्रं तदद्य सर्वदा समुद्रस्येव स्रोत्याः ॥३॥
विश्वमन्यामभीवार तदन्यस्यामधि श्रितम् ।
दिवे च विश्ववेदसे पृथिव्यै चाकरं नमः ॥४॥

यत् । रोदसी इति । रेजमाने इति । भूमिः । च । निःऽअतक्षतम् ।
आर्द्रम् । तत् । अद्य । सर्वदा । समुद्रस्यऽइव । स्रोत्याः ॥ ३ ॥
विश्वम् । अन्याम् । अभिऽवार । तत् । अन्यस्याम् । अधि । श्रितम् ।
दिवे । च । विश्वऽवेदसे । पृथिव्यै । च । अकरम् । नमः ॥ ४ ॥

( ३३ ) त्रयस्त्रिंशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य शन्तातिर्ऋषिः । चन्द्रमा आपो वा देवताः । त्रिष्टुप् छन्दः ॥

हिरण्यवर्णाः शुचयः पावका यासु जातः सविता यास्वग्निः ।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥१॥
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥२॥
यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥३॥

हिरण्यऽवर्णाः । शुचयः । पावकाः । यासु । जातः । सविता । यासु । अग्निः ।
याः । अग्निम् । गर्भम् । दधिरे । सुऽवर्णाः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु ॥ १ ॥
यासाम् । राजा । वरुणः । याति । मध्ये । सत्यानृते इति सत्यऽअनृते । अवऽपश्यन् ।
जनानाम् ।
याः । अग्निम । गर्भम् । दधिरे । सुवर्णाः । ताः । नः । आपः । शम् । स्योनाः ।
भवन्तु ॥ २ ॥

यासाम् । देवाः । दिवि । कृण्वन्ति । भक्षम् । याः । अन्तरिक्षे । बहुऽधा । भवन्ति ।
याः । अग्निम् । गर्भम् । दधिरे । सुऽवर्णाः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु ॥ ३ ॥

**I.32.3** Whatever the agitated heaven and earth have formed, that even today is ever full of sap like the springs coming out of a lake.

**I.32.4** All this has surrounded the one of them and all that is resting in the other. I pay my homage to heaven, the knower of all and to the earth, the bestower of all the riches.

## Āpaḥ--Waters

**I.33.1** The golden-hued glittering, purifying, wherein was born the Sun and wherein the fire, those of beautiful colour that conceived the fire (the foremost adorable one ) in their womb, may those elemental waters be beneficial and pleasing to us.

**I.33.2** Amidst whom the venerable sovereign goes over-seeing the truth and the untruth of men; those of beautiful colours that conceived the fire in their womb, may those elemental waters be gracious and pleasing to us.

**I.33.3** Those, that the bounties of Nature consume as food in heaven and that come up often in the midspace; those of beautiful colours, that conceived the fire in their womb, may those elemental waters be gracious and pleasing to us.

शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे ।
घृतश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु ॥४॥

शिवेन । मा । चक्षुषा । पश्यत । आपः । शिवया । तन्वा । उप । स्पृशत । त्वचम् । मे ।
घृतऽश्चुतः । शुचयः । याः । पावकाः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु ॥ ४ ॥

( ३४ ) चतुस्त्रिंशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मधुवनस्पतिर्देवता । अनुष्टुप् छन्दः ॥

इयं वीरुन्मधुजाता मधुना त्वा खनामसि ।
मधोरधि प्रजातासि सा नो मधुमतस्कृधि ॥१॥
जिह्वाया अग्रे मधु मे जिह्वामूले मधूलकम् ।
ममेदह क्रतावसो मम चित्तमुपायसि ॥२॥
मधुमन्मे निक्रमणं मधुमन्मे परायणम् ।
वाचा वदामि मधुमद्भूयासं मधुसंदृशः ॥३॥
मधोरस्मि मधुतरो मदुघान्मधुमत्तरः ।
मामित्किल त्वं वनाः शाखां मधुमतीमिव ॥४॥
परि त्वा परितत्नुनेक्षुणागामविद्विषे । यथा मां कामिन्यसो यथा मन्नापगा असः ॥५॥

इयम् । वीरुत् । मधुऽजाता । । मधुना । त्वा । खनामसि ।
मधोः । अधि । प्रऽजाता । असि । सा । नः । मधुऽमतः । कृधि ॥ १ ॥
जिह्वायाः । अग्रे । मधु । मे । जिह्वाऽमूले । मधूलकम् ।
मम । इत् । अह । क्रतौ । असः । मम । चित्तम् । उपऽआयसि ॥ २ ॥
मधुऽमत् । मे । निऽक्रमणम् । मधुऽमत् । मे । पराऽअयनम् ।
वाचा । वदामि । मधुऽमत् । भूयासम् । मधुऽसंदृशः ॥ ३ ॥
मधोः । अस्मि । मधुऽतरः । मदुघात् । मधुमत्ऽतरः ।
माम् । इत् । किल । त्वम् । वनाः । शाखाम् । मधुमतीम्ऽइव ॥ ४ ॥
परि । त्वा । परिऽतत्नुना । इक्षुणा । अगाम् । अविऽद्विषे ।
यथा । माम् । कामिनी । असः । यथा । मत् । न । अपऽगाः । असः ॥ ५ ॥

**I.33.4** O elemental waters, may you behold me with an auspicious glance; may you touch my skin with your body. Dripping lustre, glittering here and that are purifying, may those elemental waters be gracious and pleasing to us.

### Sweet Vegetation–Sugar-Cane:Love-Spell

**I.34.1** This creeper is born from honey. We dig you out with honey. You are born from honey, so you make us full of honey.

**I.34.2** May the honey be at the tip of my tongue.May the sweetness (of honey) be at the root of my tongue. O sweetness, may you reside in my action; may you come to my intentions too.

**I.34.3** May honey-sweet be my coming in, and may honey-sweet my going away be. May I speak honey-sweet with my tongue; and may I become honey personified.

**I.34.4** I am sweeter than honey. Sweeter even than the honey-yielding plant (ikṣu or sugar cane) am I. May you verily desire me like a branch with honey-comb on it.

**I.34.5** To banish malice, I have surrounded you with sugar cane (ikṣu) spreading all around, so that you may be desirous of me and may never go away from me.

( ३५ ) पञ्चत्रिंशं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः। हिरण्यमिन्द्राग्नी विश्वे देवा वा देवताः। (१–३) प्रथमादितृचस्य जगती, (४) चतुर्थ्याश्चानुष्टुब्गर्भा चतुष्पदा त्रिष्टुप् छन्दसी ॥

यदाबध्नन्दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः ।
तत्ते बध्नाम्यायुषे वर्चसे बलाय दीर्घायुत्वाय शतशारदाय ॥१॥
नैनं रक्षांसि न पिशाचाः सहन्ते देवानामोजः प्रथमजं ह्येतत् ।
यो बिभर्ति दाक्षायणं हिरण्यं स जीवेषु कृणुते दीर्घमायुः ॥२॥
अपां तेजो ज्योतिरोजो बलं च वनस्पतीनामुत वीर्याणि ।
इन्द्र इवेन्द्रियाण्यधि धारयामो अस्मिन्तद्दक्षमाणो बिभरद्धिरण्यम् ॥३॥
समानां मासामृतुभिष्ट्वा वयं संवत्सरस्य पयसा पिपर्मि ।
इन्द्राग्नी विश्वे देवास्तेनु मन्यन्तामहृणीयमानाः ॥४॥

यत् । आऽअबध्नन् । दाक्षायणाः । हिरण्यम् । शतऽअनीकाय । सुऽमनस्यमानाः ।
तत् । ते । बध्नामि । आयुषे । वर्चसे । बलाय । दीर्घायुऽत्वाय । शतऽशारदाय ॥ १ ॥
न । एनम् । रक्षांसि । न । पिशाचाः । सहन्ते । देवानाम् । ओजः । प्रथमऽजम् । हि । एतत् ।
यः । बिभर्ति । दाक्षायणम् । हिरण्यम् । सः । जीवेषु । कृणुते । दीर्घम् । आयुः ॥ २ ॥
अपाम् । तेजः । ज्योतिः । ओजः । बलम् । च । वनस्पतीनाम् । उत । वीर्याणि ।
इन्द्रेऽइव । इन्द्रियाणि । अधि । धारयामः । अस्मिन् । तत् । दक्षमाणः । बिभरत् । हिरण्यम् ॥ ३ ॥
समानाम् । मासाम् । ऋतुऽभिः । त्वा । वयम् । सम्ऽवत्सरस्य । पयसा । पिपर्मि ।
इन्द्राग्नी इति । विश्वे । देवाः । ते । अनु । मन्यन्ताम् । अहृणीयमानाः ॥ ४ ॥

॥ इति प्रथमं काण्डम् ॥

## Hiraṇyam - Gold

**I.35.1** The gold, which the children of the dexterous tie affectionately to the commander of a hundred (śatānīka) armies; that I tie to you for vital power, for lustre, for strength and a long life of hundred autumns.

**I.35.2** The pests and the blood suckers cannot stand against him, as this is the first born vigour of the bounties of Nature. He, who wears the gold got from the children of dexterous, leads a long life among the living ones.

**I.35.3** Brilliance, light, vigour and power of the waters as well as potencies of the plants we lay in him just as the capabilities abide in the resplendent Lord. Whosoever wants to become dexterous, let him wear gold.

**I.35.4** With the seasons of even months (samāna māsa) I fill you with the milk of the year. May the resplendent Lord, the adorable Lord and all the enlightened ones approve you ungrudgingly.

-------

Here ends Kāṇḍa-I

Hymns 35, Verses 153

# अथ द्वितीयं काण्डम् ॥

( १ ) प्रथमं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्य वेन ऋषिः । ब्रह्मात्मा देवता । (१–२, ४–५) प्रथमाद्वितीयाचतुर्थीपञ्चमी-
नामृचां त्रिष्टुप्, (३) तृतीयायाश्च जगती छन्दसी ॥

वेनस्तत्पश्यत्परमं गुहा यद्यत्र विश्वं भवत्येकरूपम् ।
इदं पृश्निरदुहज्जायमानाः स्वर्विदो अभ्यनूषत व्राः ॥१॥
प्र तद्वोचेदमृतस्य विद्वान्गन्धर्वो धाम परमं गुहा यत् ।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुष्पितासत् ॥२॥
स नः पिता जनिता स उत बन्धुर्धामानि वेद भुवनानि विश्वा ।
यो देवानां नामध एक एव तं संप्रश्नं भुवना यन्ति सर्वा ॥३॥
परि द्यावापृथिवी सद्य आयमुपातिष्ठे प्रथमजामृतस्य ।
वाचमिव वक्तरि भुवनेष्ठा धास्युरेष नन्वे३षो अग्निः ॥४॥

वेनः । तत् । पश्यत् । परमम् । गुहा । यत् । यत्र । विश्वम् । भवति । एकऽरूपम्
इदम् । पृश्निः । अदुहत् । जायमानाः । स्वःऽविदः । अभि । अनूषत । व्राः ॥ १
प्र । तत् । वोचेत् । अमृतस्य । विद्वान् । गन्धर्वः । धाम । परमम् । गुहा । यत् ।
त्रीणि । पदानि । निऽहिता । गुहा । अस्य । यः । तानि । वेद । सः । पितुः ।
पिता । असत् ॥ २ ॥
सः । नः । पिता । जनिता । सः । उत । बन्धुः । धामानि । वेद । भुवनानि । विश्वा ।
यः । देवानाम् । नामऽधः । एकः । एव । तम् । सम्ऽप्रश्नम् । भुवना । यन्ति । सर्वा ॥ ३ ॥
परि । द्यावापृथिवी इति । सद्यः । आयम् । उप । अतिष्ठे । प्रथमऽजाम् । ऋतस्य
वाचम्ऽइव । वक्तरि । भुवनेऽस्थाः । धास्युः । एषः । ननु । एषः । अग्निः ॥ ४ ॥

## Brahman or Ātman

**II.1.1** The Vena, the dexterous seeker, beholds the supreme that lies in the cavity and wherein all this assumes one form. The varigated one (the matter, the Sun, the ākāśa,) has produced this all. The blessed ones, being born, having attained the light, extol Him with praises.

**II.1.2** Let the master of speech, who knows the immortal one, describe the cavity that is His highest abode. Three quarters of Him lie in that cavity. He, who knows them, is the father's father.

**II.1.3** He is our father, He is our creator as well as our kinsman.He knows all the abodes as well as all the beings. He alone (i.e.though one) assumes the names of various deities. All the creatures (beings) go to Him, to the one alone worthy of thorough quest.

**II.1.4** I have gone round the heaven and earth just now to approach the first born of the truth. This sustainer one stays within all the beings just as speech within the speaker. Surely, this one is adorable Lord.

परि विश्वा भुवनान्यायमृतस्य तन्तुं विततं दृशे कम् ।
यत्र देवा अमृतमानशानाः समाने योनावध्यैरयन्त ॥५॥

परि । विश्वा । भुवनानि । आयम् । ऋतस्य । तन्तुम् । विऽततम् । दृशे । कम् ।
यत्र । देवाः । अमृतम् । आनशानाः । समाने । योनौ । अधि । ऐरयन्त ॥ ५ ॥

( २ ) द्वितीयं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य मातृनामा ऋषिः । गन्धर्वाप्सरसो देवताः । (१) प्रथमर्चो विराड् जगती.
(२-३) द्वितीयातृतीययोस्त्रिष्टुप्, (४) चतुर्थ्या विराड्गायत्री, (५) पञ्चम्याश्च भुरिगनुष्टुप् छन्दांसि ॥

दिव्यो गन्धर्वो भुवनस्य यस्पतिरेक एव नमस्यो विक्ष्वीड्यः ।
तं त्वा यौमि ब्रह्मणा दिव्य देव नमस्ते अस्तु दिवि ते सधस्थम् ॥१॥
दिवि स्पृष्टो यजतः सूर्यत्वगवयाता हरसो दैव्यस्य ।
मृडाद्गन्धर्वो भुवनस्य यस्पतिरेक एव नमस्यः सुशेवाः ॥२॥
अनवद्याभिः समु जग्म आभिरप्सरास्वपि गन्धर्व आसीत् ।
समुद्र आसां सदनं म आहुर्यतः सद्य आ च परा च यन्ति ॥३॥
अभ्रिये दिद्युन्नक्षत्रिये या विश्वावसुं गन्धर्वं सचध्वे ।
ताभ्यो वो देवीर्नम इत्कृणोमि ॥४॥

दिव्यः । गन्धर्वः । भुवनस्य । यः । पतिः । एकः । एव । नमस्यः । विक्षु । ईड्यः ।
तम् । त्वा । यौमि । ब्रह्मणा । दिव्य । देव । नमः । ते । अस्तु । दिवि । ते ।
सधऽस्थम् ॥ १ ॥

दिवि । स्पृष्टः । यजतः । सूर्यऽत्वक् । अवऽयाता । हरसः । दैव्यस्य ।
मृडात् । गन्धर्वः । भुवनस्य । यः । पतिः । एकः । एव । नमस्यः । सुऽशेवाः ॥ २ ॥
अनवद्याभिः । सम् । ऊं इति । जग्मे । आभिः । अप्सरासु । अपि । गन्धर्वः । आसीत् ।
समुद्रे । आसाम् । सदनम् । मे । आहुः । यतः । सद्यः । आ । च । परा । च । यन्ति ॥ ३ ॥
अभ्रिये । दिद्युत् । नक्षत्रिये । याः । विश्वऽवसुम् । गन्धर्वम् । सचध्वे ।
ताभ्यः । वः । देवीः । नमः । इत् । कृणोमि ॥ ४ ॥

**II.1.5** I have gone around all the worlds to watch for the well-spread and delight-full warp and woof of truth, where the enlightened ones, enjoying the immortality, ascend to a common abode.

## Gandharva-Apsarasa

**II.2.1** The divine sustainer of earth, the gandharva, who is the Lord of universe, is the only one worthy of homage and praise by people. To you, being such, I approach through prayer. O divine Lord, homage be to you. In heaven is your common abode.

**II.2.2** He touches the heaven, Sun-like is His skin. He deflects away from the sacrificer the wrath of all providential calamities. May the sustainer of earth, who is the Lord of universe, (gandharva) the only one who deserves worship, and full of delight, bestow happiness and be propitious.

**II.2.3** He was united with these blemishless ones. In the vital forces (Apsarasas) also the sustainer of the earth (gandharva) was there.I have been told that the ocean is home of these vital forces, from where they come and go away quickly.

**II.2.4** O divine vital forces, who shine in the clouds and in the constellations, and who keep company with the sustainer of the earth (gandharva) master of all the riches, I do hereby pay my homage to you.

याः क्लन्दास्तमिषीचयोक्षकामा मनोमुहः ।
ताभ्यो गन्धर्वपत्नीभ्योप्सराभ्योकरं नमः ॥५॥

याः । क्लन्दाः । तमिषीचयः । अक्षऽकामाः । मनःऽमुहः ।
ताभ्यः । गन्धर्वऽपत्नीभ्यः । अप्सराभ्यः । अकरम् । नमः ॥ ५ ॥

( ३ ) तृतीयं सूक्तम्

(१-६) षड्ऋचस्यास्य सूक्तस्याङ्गिरा ऋषिः । भैषज्यायुर्धन्वन्तरयो देवताः । (१-५) प्रथमादिपञ्चर्चामनुष्टुप्,
(६) षष्ठ्याश्च त्रिपात् स्वराड् उपरिष्टान्महाबृहती छन्दसी ॥

अदो यदवधावत्यवत्कमधि पर्वतात् । तत्ते कृणोमि भेषजं सुभेषजं यथाससि ॥१॥
आदङ्ग कुविदङ्ग शतं या भेषजानि ते । तेषामसि त्वमुत्तममनास्रावमरोगणम् ॥२॥
नीचैः खनन्त्यसुरा अरुस्राणमिदं महत् । तदास्रावस्य भेषजं तदु रोगमनीनशत् ॥३॥
उपजीका उद्भरन्ति समुद्रादधि भेषजम् । तदास्रावस्य भेषजं तदु रोगमशीशमत् ॥४॥
अरुस्राणमिदं महत्पृथिव्या अध्युद्भृतम् । तदास्रावस्य भेषजं तदु रोगमनीनशत् ॥५॥
शं नो भवन्त्वप ओषधयः शिवाः ।
इन्द्रस्य वज्रो अप हन्तु रक्षस आराद्विसृष्टा इषवः पतन्तु रक्षसाम् ॥६॥

अदः । यत् । अवऽधावति । अवत्ऽकम् । अधि । पर्वतात् ।
तत् । ते । कृणोमि । भेषजम् । सुऽभेषजम् । यथा । अससि ॥ १ ॥

आत् । अङ्ग । कुवित् । अङ्ग । शतम् । या । भेषजानि । ते ।
तेषाम् । असि । त्वम् । उत्ऽतमम । अनाम्रावम् । अरोगणम् ॥ २ ॥

नीचैः । खनन्ति । असुराः । अरुःऽस्राणम् । इदम् । महत् ।
तत् । आऽस्रावस्य । भेषजम् । तत् । ऊं इति । रोगम् । अनीनशत् ॥ ३ ॥

उपऽजीकाः । उत् । भरन्ति । समुद्रात् । अधि । भेषजम् ।
तत् । आऽस्रावस्य । भेषजम् । तत् । ऊं इति । रोगम् । अशीशमत् ॥ ४ ॥

अरुःऽस्राणम् । इदम् । महत् । पृथिव्याः । अधि । उत्ऽभृतम् ।
तत् । आऽस्रावस्य । भेषजम् । तत् । ऊं इति । रोगम् । अनीनशत् ॥ ५ ॥

शम् । नः । भवन्तु । अपः । ओषधयः । शिवाः ।
इन्द्रस्य । वज्रः । अप । हन्तु । रक्षसः । आरात् । विऽसृष्टाः । इषवः । पतन्तु ।
रक्षसाम् ॥ ६ ॥

**II.2.5** Who are shrill-voiced, dispellers of darkness, beautiful to look at, and capturers of heart, and who are as if the wives of the sustainer of the earth, (gandharvas) to those vital forces (apsaras) I hereby pay my homage.

## Remedy for Āsrāva or Flow

**II.3.1** The water, that runs downward there from the top of the mountain, that I make a remedy for you, so that you may be good medicine.

**II.3.2** Hither O dear, and thither O dear, whatsoever are your remedies, among them you are the best, curing the flux (morbid flow) and curing disease.

**II.3.3** Out of deep earth, the vitality-givers (asuras) dig it up, which is a great wound-healer. This is the remedy for morbid flux and this has driven the disease away.

**II.3.4** The white ants bring up this remedy out of the water flood. This is the remedy for morbid flux and this has cured the disease.

**II.3.5** This is the great wound-healer, which has been brought up out of the earth. This is the remedy for morbid flux and this has driven the disease away.

**II.3.6** May the waters be to our weal. May the herbs be propitious to us. May the thunder-bolt of the resplendent Lord smite off the demoniac tendencies. May the arrows, hurled by evil-minded persons, fall far away from us.

( ४ ) चतुर्थं सूक्तम्

(१–६) षड्‌ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । चन्द्रमा जङ्गिडो वा देवता । (१) प्रथमर्चो विराट् प्रस्तारपङ्क्तिः, (२–६) द्वितीयादिपञ्चानाञ्चानुष्टुप् छन्दसी ॥

दीर्घायुत्वाय बृहते रणायारिष्यन्तो दक्षमाणाः सदैव ।
मणिं विष्कन्धदूषणं जङ्गिडं बिभृमो वयम् ॥१॥
जङ्गिडो जम्भाद्विशराद्विष्कन्धादभिशोचनात् ।
मणिः सहस्रवीर्यः परि णः पातु विश्वतः ॥२॥
अयं विष्कन्धं सहतेयं बाधते अत्रिणः ।
अयं नो विश्वभेषजो जङ्गिडः पात्वंहसः ॥३॥
देवैर्दत्तेन मणिना जङ्गिडेन मयोभुवा ।
विष्कन्धं सर्वा रक्षांसि व्यायामे सहामहे ॥४॥
शणश्च मा जङ्गिडश्च विष्कन्धादभि रक्षताम् ।
अरण्यादन्य आभृतः कृष्या अन्यो रसेभ्यः ॥५॥
कृत्यादूषिरयं मणिरथो अरातिदूषिः ।
अथो सहस्वान् जङ्गिडः प्र ण आयूंषि तारिषत् ॥६॥

दीर्घायुऽत्वाय । बृहते । रणाय । अरिष्यन्तः । दक्षमाणाः । सदा । एव ।
मणिम् । विस्कन्धऽदूषणम् । जङ्गिडम् । बिभृमः । वयम् ॥ १ ॥
जङ्गिडः । जम्भात् । विऽशरात् । विऽस्कन्धात् । अभिऽशोचनात् ।
मणिः । सहस्रऽवीर्यः । परि । नः । पातु । विश्वतः ॥ २ ॥
अयम् । विऽस्कन्धम् । सहते । अयम् । बाधते । अत्रिणः ।
अयम् । नः । विश्वऽभेषजः । जङ्गिडः । पातु । अंहसः ॥ ३ ॥
देवैः । दत्तेन । मणिना । जङ्गिडेन । मयःऽभुवा ।
विऽस्कन्धम् । सर्वा । रक्षांसि । विऽआयामे । सहामहे ॥ ४ ॥
शणः । च । मा । जङ्गिडः । च । विऽस्कन्धात् । अभि । रक्षताम् ।
अरण्यात् । अन्यः । आऽभृतः । कृष्याः । अन्यः । रसेभ्यः ॥ ५ ॥
कृत्याऽदूषिः । अयम् । मणिः । अथो इति । अरातिऽदूषिः ।
अथो इति । सहस्वान् । जङ्गिडः । प्र । नः । आयूंषि । तारिषत् ॥ ६ ॥

## Jaṅgiḍa-Maṇi

**II.4.1** For long life and for great happiness, we properly utilize the jaṅgiḍa-mani, a jewel, or a vaccine derived from plants that removes obstacles, and thus we are never injured and are always gaining dexterity.

**II.4.2** May the jaṅgiḍa-inoculation, having thousand of poweress, protect us all around from lock-jaw, polio, rheumatism, and mental depression.

**II.4.3** This jaṅgiḍa-mani, a vaccination derived from plants, overcomes the rheumatism; this resists the devouring germs. May this jaṅgiḍa vaccine, a wide based remedy, protect us from various diseases.

**II.4.4** With this joy-bestowing jaṅgiḍa vaccine , that has been given by the bounties of Nature, we overcome every obstacle and all the germs of diseases in our struggle.

**II.4.5** May the hemp and the jaṅgiḍa protect me from the rheumatism. One of these is procured from the forest and the other one from the saps of the cultivated plants.

**II.4.6** This vaccine is a destroyer of evil infections as well as a destroyer of hostile worms. Therefore, may this powerful jaṅgiḍa extend our lives.

### ( ५ ) पञ्चमं सूक्तम्

(१–७) सप्तर्चस्यास्य सूक्तस्याथर्वणो भृगुर्ऋषिः । इन्द्रो देवता । (१) प्रथमर्चो निचृदुपरिष्टाद्बृहती, (२) द्वितीयाया विराडुपरिष्टाद्बृहती, (३) तृतीयाया विराट् पथ्याबृहती, (४) चतुर्थ्याः पुरोविराड् जगती, (५–७) पञ्चम्यादितृचस्य च त्रिष्टुप् छन्दांसि ॥

इन्द्र जुषस्व प्र वहा याहि शूर हरिभ्याम् ।
पिबा सुतस्य मतेरिह मधोश्चकानश्चारुर्मदाय ॥१॥

इन्द्र जठरं नव्यो न पृणस्व मधोर्दिवो न ।
अस्य सुतस्य स्वर्णोप त्वा मदाः सुवाचो अगुः ॥२॥

इन्द्रस्तुराषाण्मित्रो वृत्रं यो जघान यतीर्न ।
बिभेद वलं भृगुर्न ससहे शत्रून्मदे सोमस्य ॥३॥

आ त्वा विशन्तु सुतास इन्द्र पृणस्व कुक्षी विड्ढि शक्र धियेह्या नः ।
श्रुधी हवं गिरो मे जुषस्वेन्द्र स्वयुग्भिर्मत्स्वेह महे रणाय ॥४॥

इन्द्रस्य नु प्रा वोचं वीर्याणि यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥५॥

इन्द्र । जुषस्व । प्र । वह । आ । याहि । शूर । हरिऽभ्याम् ।
पिब । सुतस्य । मतेः । इह । मधोः । चकानः । चारुः । मदाय ॥ १ ॥

इन्द्र । जठरम् । नव्यः । न । पृणस्व । मधोः । दिवः । न ।
अस्य । सुतस्य । स्वः । न । उप । त्वा । मदाः । सुऽवाचः । अगुः ॥ २ ॥

इन्द्रः । तुराषाट् । मित्रः । वृत्रम् । यः । जघान । यतीः । न ।
बिभेद । वलम् । भृगुः । न । ससहे । शत्रून् । मदे । सोमस्य ॥ ३ ॥

आ । त्वा । विशन्तु । सुतासः । इन्द्र । पृणस्व । कुक्षी इति । विड्ढि । शक्र । धिया । आ । इहि । आ । नः ।
श्रुधि । हवम् । गिरः । मे । जुषस्व । आ । इन्द्र । स्वयुक्ऽभिः । मत्स्व । इह । महे । रणाय ॥ ४ ॥

इन्द्रस्य । नु । प्र । वोचम् । वीर्याणि । यानि । चकार । प्रथमानि । वज्री ।
अहन् । अहिम् । अनु । अपः । ततर्द । प्र । वक्षणाः । अभिनत् । पर्वतानाम् ॥ ५ ॥

## Indra

**II.5.1** O resplendent Lord, may you be pleased, may you bring to us what is good. O the brave one, come with your two steeds. May you enjoy here sweet and pure devotion expressed by the wise one to your heartiest exhiliration and satisfaction.

**II.5.2** O resplendent Lord, like one to be praised, may you fill your belly with this devotional bliss, which is as if sweet honey of heaven. May our intoxicating sweet words of praise for this expressed devotion reach high up to you in heaven.

**II.5.3** The resplendent one is friend coming swiftly to aid.He kills the nescience like unrighteous offenders.Like a blazing sun, he, breaks open the cave (of ignorance). He overpowers the enemies in the ecstacy of devotional bliss.

**II.5.4** May our expressed devotions approach you from all sides. O resplendent self, may you fill both sides of your belly (with them). Make us prosper, O mighty one. May you listen to my invocation. May my words of praise please you. May you enjoy yourself along with your companions for great pleasing accomplishments (and victories).

**II.5.5** May I acclaim the valorous deeds of the resplendent soul (the lower self),which he has achieved; he has cloven (and split asunder) the clouds of blind and dark impulses;and cast out the evil thoughts; he has broken a way for the torrents of wisdom through obstacles. (also Ṛg. I.32.1)

**अहुन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।**
**वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः ॥६॥**
**वृषायमाणो अवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य ।**
**आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ॥७॥**

अहन् । अहिम् । पर्वते । शिश्रियाणम् । त्वष्टा । अस्मै । वज्रम् । स्वर्यम् । ततक्ष ।
वाश्राःऽइव । धेनवः । स्यन्दमानाः । अञ्जः । समुद्रम् । अव । जग्मुः । आपः ॥ ६ ॥

वृषऽयमानः । अवृणीत । सोमम् । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य ।
आ । सायकम् । मघऽवा । अदत्त । वज्रम् । अहन् । एनम् । प्रथमऽजाम् । अहीनाम् ॥ ७ ॥

( ६ ) षष्ठं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्य शौनक ऋषिः । अग्निर्देवता । (१–३) प्रथमादितृचस्य त्रिष्टुप्,
(४) चतुर्थ्याश्चतुष्पदार्षी पङ्क्तिः, (५) पञ्चम्याश्च विराट् प्रस्तारपङ्क्तिश्छन्दांसि ॥

**समास्त्वाग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या ।**
**सं दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशश्चतस्रः ॥१॥**
**सं चेध्यस्वाग्ने प्र च वर्धयेममुच्च तिष्ठ महते सौभगाय ।**
**मा ते रिषन्नुपसत्तारो अग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये ॥२॥**
**त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने संवरणे भवा नः ।**
**सपत्नहाग्ने अभिमातिजिद्भव स्वे गये जागृह्यप्रयुच्छन् ॥३॥**
**क्षत्रेणाग्ने स्वेन सं रभस्व मित्रेणाग्ने मित्रधा यतस्व ।**
**सजातानां मध्यमेष्ठा राज्ञामग्ने विहव्यो दीदिहीह ॥४॥**

समाः । त्वा । अग्ने । ऋतवः । वर्धयन्तु । सम्ऽवत्सराः । ऋषयः । यानि । सत्या ।
सम् । दिव्येन । दीदिहि । रोचनेन । विश्वाः । आ । भाहि । प्रऽदिशः । चतस्रः ॥ १ ॥

सम् । च । इध्यस्व । अग्ने । प्र । च । वर्धय । इमम् । उत् । च । तिष्ठ । महते । सौभगाय ।
मा । ते । रिषन् । उपऽसत्तारः । अग्ने । ब्रह्माणः । ते । यशसः । सन्तु । मा । अन्ये ॥ २ ॥

त्वाम् । अग्ने । वृणते । ब्राह्मणाः । इमे । शिवः । अग्ने । सम्ऽवरणे । भव । नः ।
सपत्नऽहा । अग्ने । अभिमातिऽजित् । भव । स्वे । गये । जागृहि । अप्रऽयुच्छन् ॥३॥

क्षत्रेण । अग्ने । स्वेन । सम् । रभस्व । मित्रेण । अग्ने । मित्रऽधा । यतस्व ।
सऽजातानाम् । मध्यमेऽस्थाः । राज्ञाम् । अग्ने । विऽहव्यः । दीदिहि । इह ॥ ४ ॥

**II.5.6** He has sent asunder the cloud of blind impulses seeking refuge in the obstacles. The supreme architect has conquered with his all-encompassing bolt of will-power. The cloud of passions have been broken; the water of animated evil thoughts has rapidly rushed to the heart, like cows hastening to the calves. (also Ṛg. I.32.2)

**II.5.7** The powerful soul accumulated his strength in three virtuous directions - physical, mental and spiritual.He sharpened his will-power and struck the first born of the evil impulses, the sexual one. (also Ṛg. I.32.3)

## Agni

**II.6.1** Half-years and seasons, O adorable Lord, strengthen all of us, including seers and seekers of truth; may you flash forth with your divine effulgence, please do illume me all the four regions of heavens. (also Yv. XXVII.1)

**II.6.2** O adorable Lord, please kindle yourself, and make this devotee prosperous, O man rise up erect for high and happy prosperity and fortune. O Lord, may those who adore you, be always free from injury; may our men of wisdom and learning be glorious-not others (who are opposed to truth) (also Yv. XXVII.2).

**II.6.3** These persons of divine learning have chosen you (for leadership), O foremost adorable Lord, may you be propitious in our sacred field of work. O Lord, slayer of rivals, please quell our foemen;please give all of us your protection, and such assistance that never ceases. (also Yv. XXVII.3)

**II.6.4** O foremost adorable Lord, please take hold of thine own dominion, with your devotees, please strive in friendly wise.Placed be in the centrr of our fellows, O Lord, shine you here with flash, and be invoked by our princes and kings. (also Yv. XXVI II.5)

अति निहो अति स्रिधोत्यचित्तीरति द्विषः ।
विश्वा ह्यग्ने दुरिता तर त्वमथास्मभ्यं सहवीरं रयिं दाः ॥५॥

अति । निहः । अति । स्रिधः । अति । अचित्तीः । अति । द्विषः ।
विश्वा । हि । अग्ने । दुःऽइता । तर । त्वम् । अथ । अस्मभ्यम् । सहऽवीरम् ।
रयिम् । दाः ॥ ५ ॥

( ७ ) सप्तमं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । भैषज्यायुर्वनस्पतयो देवताः । (१) प्रथमर्चो भुरिगनुष्टुप्, (२–३, ५) द्वितीयातृतीयापञ्चमीनामनुष्टुप्, (४) चतुर्थ्याश्च विराडुपरिष्टाद्बृहती छन्दांसि ॥

अघद्विष्टा देवजाता वीरुच्छपथयोपनी ।
आपो मलमिव प्राणैक्षीत्सर्वान्मच्छपथाँ अधि ॥१॥
यश्च सापत्नः शपथो जाम्याः शपथश्च यः ।
ब्रह्मा यन्मन्युतः शपात्सर्वं तन्नो अधस्पदम् ॥२॥
दिवो मूलमवततं पृथिव्या अध्युत्ततम् ।
तेन सहस्रकाण्डेन परि णः पाहि विश्वतः ॥३॥
परि मां परि मे प्रजां परि णः पाहि यद्धनम् ।
अरातिर्नो मा तारीन्मा नस्तारिषुरभिमातयः ॥४॥
शप्तारमेतु शपथो यः सुहार्त्तेन नः सह ।
चक्षुर्मन्त्रस्य दुर्हार्दः पृष्टीरपि शृणीमसि ॥५॥

अघऽद्विष्टा । देवऽजाता । वीरुत् । शपथऽयोपनी ।
आपः । मलम्ऽइव । प्र । अनैक्षीत् । सर्वान् । मत् । शपथान् । अधि ॥ १ ॥
यः । च । सापत्नः । शपथः । जाम्याः । शपथः । च । यः ।
ब्रह्मा । यत् । मन्युतः । शपात् । सर्वम् । तत् । नः । अधःऽपदम् ॥ २ ॥
दिवः । मूलम् । अवऽततम् । पृथिव्याः । अधि । उत्ऽततम् ।
तेन । सहस्रऽकाण्डेन । परि । नः । पाहि । विश्वतः ॥ ३ ॥
परि । माम् । परि । मे । प्रऽजाम् । परि । नः । पाहि । यत् । धनम् ।
अरातिः । नः । मा । तारीत् । मा । नः । तारिषुः । अभिऽमातयः ॥ ४ ॥
शप्तारम् । एतु । शपथः । यः । सुऽहार्त् । तेन । नः । सह ।
चक्षुःऽमन्त्रस्य । दुःऽहार्दः । पृष्टीः । अपि । शृणीमसि ॥ ५ ॥

**II.6.5** O adorable Lord, overpower them who slay; may you crush our énemies;please defeat the plans of thoughtless persons;subdue them who hate us. O Lord, please hear us and take us safe past all distresses. Please make us and all our people opulent ; (may we be accompanied) with heroes. (also Yv. XXVII.6)

## Vanaspatiḥ

**II.7.1** Hating sins (and also hated by sinners), born of the bounties of Nature, this creeper (plant) is remover of deep seated diseases. As waters wash away the filth, so may this clean me from all serious diseases.

**II.7.2** The cursed disease, that has come from the evil company of my rivals, and the cursed disease that has come from women, and the cursed disease that might have come from a wrathful physician, may all that be overcome by us.

**II.7.3** The root has come down from the sky, and from the earth you spread upwards. With this, that has a thousand joints, may you protect us from all the sides.

**II.7.4** From all the sides, may you protect me, my progeny, and my wealth whatever I have. May not a miser enemy surpass us, nor may the bullies overcome us.

**II.7.5** May the cursed disease go back to the curser. May our friendship be with him, who is of good heart. We shall crush even the ribs of the ill-intending persons who look at us with an evil eye (and deliberately spread infectious diseases) .

(८) अष्टमं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः। वनस्पतिर्यक्ष्मनाशनश्च देवते। (१–२) प्रथमाद्वितीययोरनुष्टुप्, (३) तृतीयायाः पथ्यापङ्क्तिः, (४) चतुर्थ्या विराडनुष्टुप्, (५) पञ्चम्याश्च निचृत्पथ्यापङ्क्तिश्छन्दांसि ॥

उदगातां भगवती विचृतौ नाम तारके ।
वि क्षेत्रियस्य मुञ्चतामधमं पाशमुत्तमम् ॥१॥
अपेयं रात्र्युच्छत्वपोच्छन्त्वभिकृत्वरीः ।
वीरुत्क्षेत्रियनाशन्यप क्षेत्रियमुच्छतु ॥२॥
बभ्रोरर्जुनकाण्डस्य यवस्य ते पलाल्या तिलस्य तिलपिञ्ज्या ।
वीरुत्क्षेत्रियनाशन्यप क्षेत्रियमुच्छतु ॥३॥
नमस्ते लाङ्गलेभ्यो नम ईषायुगेभ्यः ।
वीरुत्क्षेत्रियनाशन्यप क्षेत्रियमुच्छतु ॥४॥
नमः सनिस्रसाक्षेभ्यो नमः संदेश्येभ्यः ।
नमः क्षेत्रस्य पतये वीरुत्क्षेत्रियनाशन्यप क्षेत्रियमुच्छतु ॥५॥

उत् । अगाताम् । भगवती इति भगऽवती । विऽचृतौ । नाम । तारके इति ।
वि । क्षेत्रियस्य । मुञ्चताम् । अधमम् । पाशम् । उत्ऽतमम् ॥ १ ॥

अप । इयम् । रात्री । उच्छतु । अप । उच्छन्तु । अभिऽकृत्वरीः ।
वीरुत् । क्षेत्रियऽनाशनी । अप । क्षेत्रियम् । उच्छतु ॥ २ ॥

बभ्रोः । अर्जुनऽकाण्डस्य । यवस्य । ते । पलाल्या । तिलस्य । तिलऽपिञ्ज्या ।
वीरुत् । क्षेत्रियऽनाशनी । अप । क्षेत्रियम् । उच्छतु ॥ ३ ॥

नमः । ते । लाङ्गलेभ्यः । नमः । ईषाऽयुगेभ्यः ।
वीरुत् । क्षेत्रियऽनाशनी । अप । क्षेत्रियम् । उच्छतु ॥ ४ ॥

नमः । सनिस्रसऽअक्षेभ्यः । नमः । सम्ऽदेश्येभ्यः ।
नमः । क्षेत्रस्य । पतये । वीरुत् । क्षेत्रियऽनाशनी । अप । क्षेत्रियम् । उच्छतु ॥ ५ ॥

## Kṣettriya Diseases - Hereditary

**II.8.1** Two shining stars have risen up; releasers vicrtau is their name. May both of them unfasten the noose of the hereditary disease (kṣetriya),pertaining to the lower part of the body, as well as to the upper one.

**II.8.2** May this night depart and may the smiting malignities depart. May this medicinal plant, destroyer of hereditarty diseases , help us in eliminating the hereditary diseases.

**II.8.3** With the straw of the brown-colored, whitish-jointed barley and with the stalks of sesame, may this medicinal plant, destroyer of hereditary disease, remove your hereditary disease.

**II.8.4** Let your homage be to ploughs (lāngala) and homage to poles (iṣā) and yokes (yuga) May this medicinal plant, destroyer of hereditary disease, remove, the hereditary disease.

**II.8.5** Let your homage be to ever-watchful sentinels and homage to the orderlies. Homage also to the master of the field. May this medicinal plant, destroyer of hereditary disease, remove the hereditary disease.

( ९ ) नवमं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । यक्ष्मनाशनो वनस्पतिर्देवता । (१) प्रथमर्चो विराट् प्रस्तारपङ्क्तिः, (२-५) द्वितीयादिचतसृणाञ्चानुष्टुप् छन्दसी ॥

दशवृक्ष मुञ्चेमं रक्षसो ग्राह्या अधि यैनं जग्राह पर्वसु ।
अथो एनं वनस्पते जीवानां लोकमुन्नय ॥१॥
आगादुदगादयं जीवानां व्रातमप्यगात् ।
अभूदु पुत्राणां पिता नृणां च भगवत्तमः ॥२॥
अधीतीरध्यगादयमधि जीवपुरा अगन् ।
शतं ह्यस्य भिषजः सहस्रमुत वीरुधः ॥३॥
देवास्ते चीतिमविदन्ब्रह्माण उत वीरुधः ।
चीतिं ते विश्वे देवा अविदन्भूम्यामधि ॥४॥
यश्चकार स निष्करत्स एव सुभिषक्तमः ।
स एव तुभ्यं भेषजानि कृणवद्भिषजा शुचिः ॥५॥

दशऽवृक्ष । मुञ्च । इमम् । रक्षसः । ग्राह्याः । अधि । या । एनम् । जग्राह । पर्वऽसु ।
अथो इति । एनम् । वनस्पते । जीवानाम् । लोकम् । उत् । नय । ॥ १ ॥
आ । अगात् । उत् । अगात् । अयम् । जीवानाम् । व्रातम् । अपि । अगात् ।
अभूत् । ऊं इति । पुत्राणाम् । पिता । नृणाम् । च । भगवत्ऽतमः ॥ २ ॥
अधिऽइतीः । अधि । अगात् । अयम् । अधि । जीवऽपुराः । अगन् ।
शतम् । हि । अस्य । भिषजः । सहस्रम् । उत । वीरुधः ॥ ३ ॥
देवाः । ते । चीतिम । अविदन् । ब्रह्माणः । उत । वीरुधः ।
चीतिम् । ते । विश्वे । देवाः । अविदन् । भूम्याम् । अधि ॥ ४ ॥
यः । चकार । सः । निः । करत् । सः । एव । सुभिषक्ऽतमः ।
सः । एव । तुभ्यम् । भेषजानि । कृणवत् । भिषजा । शुचिः ॥ ५ ॥

## Vegetation - Vanaspatiḥ

**II.9.1** O daśavṛkṣa (liter.-"ten-tree") may you free this person from the grip of the evil disease, that has seized him in the joints. Thereafter, O Lord of vegetation, may you bring him up to the world of the living.

**II.9.2** This person has come round, has risen up and has also come into the community of the living.He has become father of sons and most reputed among men.

**II.9.3** He has obtained the thing worth obtaining .He has got all the necessities of life. A hundred are his healers and a thousand his medicinal herbs.

**II.9.4** The enlightened ones know how to collect you and the physician know the plants. All the bounties of Nature have made it possible to gather you on the earth.

**II.9.5** He, who so makes frees also from the disease. He is the best of the healers. May only, He, the true healer, provide remedies for you.

( १० ) दशमं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः। (१) प्रथमर्चो ब्रह्मणा सह निर्ऋतिः, (२-८) द्विती यादिसप्तानाञ्च द्यावापृथिव्यौ, तत्रापि (२) द्वितीयायाः पूर्वपादस्याद्भिः सहाग्निः, उत्तरस्य च ओषधिभिः सह सोमः, (३) तृतीयायाः पूर्वपादस्य वात उत्तरस्य च चतस्रो दिशः, (४-८) चतुर्थ्यादिपञ्चानाञ्च वातपत्न्यः सूर्यो यक्ष्मा निर्ऋति-प्रभृतयश्च देवताः। (१) प्रथमायास्त्रिष्टुप्, (२) द्वितीयायाः सप्तपादष्टिः, (३-५, ७-८) तृतीयादि-त्र्यस्य सप्तम्यष्टम्योश्च सप्तपदा धृतिः, (६) षष्ठयाश्च सप्तपदात्यष्टिश्छन्दांसि ॥

क्षेत्रियात्त्वा निर्ऋत्या जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पाशात्।
अनागसं ब्रह्मणा त्वा कृणोमि शिवे ते द्यावापृथिवी उभे स्ताम् ॥१॥
शं ते अग्निः सहाद्भिरस्तु शं सोमः सहौषधीभिः ।
एवाहं त्वां क्षेत्रियान्निर्ऋत्या जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पाशात्।
अनागसं ब्रह्मणा त्वा कृणोमि शिवे ते द्यावापृथिवी उभे स्ताम् ॥२॥
शं ते वातो अन्तरिक्षे वयो धाच्छं ते भवन्तु प्रदिशश्चतस्रः।
एवाहं त्वां क्षेत्रियान्निर्ऋत्या जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पाशात्।
अनागसं ब्रह्मणा त्वा कृणोमि शिवे ते द्यावापृथिवी उभे स्ताम् ॥३॥

क्षेत्रियात्। त्वा। निःऽऋत्याः। जामिशंसात्। द्रुहः। मुञ्चामि। वरुणस्य। पाशात्।
अनागसम्। ब्रह्मणा। त्वा। कृणोमि। शिवे इति। ते। द्यावापृथिवी इति।
उभे इति। स्ताम्॥ १ ॥

शम्। ते। अग्निः। सह। अत्ऽभिः। अस्तु। शम्। सोमः। सह। ओषधीभिः।
एव। अहम्। त्वाम्। क्षेत्रियात्। निःऽऋत्याः। जामिऽशंसात्। द्रुहः। मुञ्चामि।
वरुणस्य। पाशात्। अनागसम्। ब्रह्मणा। त्वा। कृणोमि। शिवे इति। ते।
द्यावापृथिवी इति। उभे इति। स्ताम्॥ २ ॥

शम्। ते। वातः। अन्तरिक्षे। वयः। धात्। शम्। ते। भवन्तु। प्रऽदिशः। चतस्रः।
एव। अहम्। त्वाम्। क्षेत्रियात्। निःऽऋत्याः। जामिऽशंसात्। द्रुहः। मुञ्चामि।
वरुणस्य। पाशात्। अनागसम्। ब्रह्मणा। त्वा। कृणोमि। शिवे इति। ते।
द्यावापृथिवी इति। उभे इति। स्ताम्॥ ३ ॥

## Nivṛti - Hereditary Diseases

**II.10.1** I hereby free you from the wretchedness of the hereditary disease, from the unpleasant consequences of attachment to women, and from the noose of the venerable Lord (Varuṇa) . With my prayer (knowledge or brahmaṇā),I make you free from the faults. May both the heaven and earth be benevolent to you.

**II.10.2** May the fire-divine along with the waters be benevolent to you. Benevolent to you be the Soma along with the medicinal herbs. Thus I hereby free you from the wretchedness of the hereditary disease, from the unpleasant consequences of attachment to women, and from the noose of the venerable Lord. With my prayer I make you free from ills and faults. May both the heaven and earth be benevolent to you.

**II.10.3** Benevolent to you be the wind in the midspace and bestow vigour. May the four mid-regions be benevolent to you. Thus I hereby free you from the wretchedness of the hereditary disease, from the unpleasant consequences of attachment to women and from the noose of the venerable Lord. With my prayer, I make you free from faults and ills. May both the heaven and earth be benevolent to you.

इमा या देवीः प्रदिशश्चतस्रो वातपत्नीरभि सूर्यो विचष्टे ।
एवाहं त्वां क्षेत्रियान्निर्ऋत्या जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पाशात् ।
अनागसं ब्रह्मणा त्वा कृणोमि शिवे ते द्यावापृथिवी उभे स्ताम् ॥४॥
तासु त्वान्तर्जरस्या दधामि प्र यक्ष्म एतु निर्ऋतिः पराचैः ।
एवाहं त्वां क्षेत्रियान्निर्ऋत्या जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पाशात् ।
अनागसं ब्रह्मणा त्वा कृणोमि शिवे ते द्यावापृथिवी उभे स्ताम् ॥५॥
अमुक्था यक्ष्माद्दुरितादवद्याद्द्रुहः पाशाद्ग्राह्याश्चोदमुक्थाः ।
एवाहं त्वां क्षेत्रियान्निर्ऋत्या जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पाशात् ।
अनागसं ब्रह्मणा त्वा कृणोमि शिवे ते द्यावापृथिवी उभे स्ताम् ॥६॥
अहा अरातिमविदः स्योनमप्यभूर्भद्रे सुकृतस्य लोके ।
एवाहं त्वां क्षेत्रियान्निर्ऋत्या जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पाशात् ।
अनागसं ब्रह्मणा त्वा कृणोमि शिवे ते द्यावापृथिवी उभे स्ताम् ॥७॥

इमाः । याः । देवीः । प्रऽदिशः । चतस्रः । वातऽपत्नीः । अभि । सूर्यः । विऽचष्टे । एव । अहम् । त्वाम् । क्षेत्रियात् । निःऽऋत्याः । जामिऽशंसात् । द्रुहः । मुञ्चामि । वरुणस्य । पाशात् ।अनागसम् । ब्रह्मणा । त्वा । कृणोमि । शिवे इति । ते । द्यावापृथिवी इति । उभे इति । स्ताम् ॥ ४ ॥

तासु । त्वा । अन्तः । जरसि । आ । द ा मि । प्र । यक्ष्मः । एतु । निःऽऋतिः । पराचैः । एव । अहम् । त्वाम् । क्षेत्रियात् । निःऽऋत्याः । जामिऽशंसात् । द्रुहः । मुञ्चामि । वरुणस्य । पाशात् । अनागसम् । ब्रह्मणा । त्वा । कृणोमि । शिवे इति । ते । द्यावापृथिवी इति । उभे इति । स्ताम् ॥ ५ ॥

अमुक्थाः । यक्ष्मात् । दुःऽइतात् । अवद्यात् । द्रुहः । पाशात् । ग्राह्याः । च । उत् । अमुक्थाः । एव । अहम् । त्वाम् । क्षेत्रियात् । निःऽऋत्याः । जामिऽशंसात् । द्रुहः । मुञ्चामि । वरुणस्य । पाशात् । अनागसम् । ब्रह्मणा । त्वा । कृणोमि । शिवे इति । ते । द्यावापृथिवी इति । उभे इति । स्ताम् ॥ ६ ॥

अहाः । अरातिम् । अविदः । स्योनम् । अपि । अभूः । भद्रे । सुऽकृतस्य । लोके । एव । अहम् । त्वाम् । क्षेत्रियात् । निःऽऋत्याः । जामिऽशंसात् । द्रुहः । मुञ्चामि । वरुणस्य । पाशात् । अनागसम् । ब्रह्मणा । त्वा । कृणोमि । शिवे इति । ते । द्यावापृथिवी इति । उभे इति । स्ताम् ॥ ७ ॥

**II.10.4** These are the four heavenly mid-regions , protectors of the wind, on which the Sun shines all around. With them I hereby free you from the wretchedness of the hereditary disease, from the unpleasant consequences of attachment to women, and from the noose of the venerable Lord. With my prayer, I make you free from faults, and ills. May both the heaven and earth be benevolent to you.

**II.10.5** I put you in the midst of them to reach the ripe old age. May your wasting disease and the wretchedness go far away. Thus I hereby free you from the wretchedness of the hereditary disease, from the unpleasant consequences of attachment to women, and from the noose of the venerable Lord. With my prayer, I make you free from faults and ills. May both the heaven and earth be benevolent to you.

**II.10.6** You have been freed from the wasting disease, from the heinous sin, from treachery, and from the grip of rheumatism. Thus I hereby free you from the wretchedness of the hereditary disease, from the unpleasant consequences of attachment to women and from the noose of the venerable Lord. With my prayer, I make you free from faults and ills. May both the heaven and earth be benevolent to you.

II.10.7 You have left the misery behind. You have attained happiness and you have come into the nice world of virtue. Thus I free you from the wretchedness of the hereditary disease, from the unpleasent consequences of attachment of women and from the noose of the venerable Lord. With my prayer, I make you free from faults and ills. May both the heaven and earth be benevolent to you.

**सूर्यमृतं तमसो ग्राह्या अधि देवा मुञ्चन्तो असृजन्निरेणसः ।**
**एवाहं त्वां क्षेत्रियान्निर्ऋत्या जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पाशात् ।**
**अनागसं ब्रह्मणा त्वा कृणोमि शिवे ते द्यावापृथिवी उभे स्ताम् ॥८॥**

सूर्यम् । ऋतम् । तमसः । ग्राह्याः । अधि । देवाः । मुञ्चन्तः । असृजन् । निः । एनसः । एव । अहम् । त्वाम् । क्षेत्रियात् । निःऽऋत्याः । जामिऽशंसात् । द्रुहः । मुञ्चामि । वरुणस्य । पाशात् । अनागसम् । ब्रह्मणा । त्वा । कृणोमि । शिवे इति । ते । द्यावापृथिवी इति । उभे इति । स्ताम् ॥ ८ ॥

(११) एकादशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य शुक्र ऋषिः । कृत्यादूषणं देवता । (१) प्रथमायाश्चतुष्पदा विराड्गायत्री, (२-५) द्वितीयादिचतसृणाञ्च त्रिपदा परोष्णिक्, तत्रापि (४) चतुर्थ्याः पिपीलिकमध्या निचृच्छन्दांसि ॥

**दूष्या दूषिरसि हेत्या हेतिरसि मेन्या मेनिरसि । आप्नुहि श्रेयांसमति समं क्राम ॥१॥**
**स्रक्त्योऽसि प्रतिसरोऽसि प्रत्यभिचरणोसि । आप्नुहि श्रेयांसमति समं क्राम ॥२॥**
**प्रति तमभि चर योऽस्मान्द्वेष्टि यं वयं द्विष्मः । आप्नुहि श्रेयांसमति समं क्राम ॥३॥**
**सूरिरसि वर्चोधा असि तनूपानोसि । आप्नुहि श्रेयांसमति समं क्राम ॥४॥**
**शुक्रोऽसि भ्राजोऽसि स्वरसि ज्योतिरसि । आप्नुहि श्रेयांसमति समं क्राम ॥५॥**

दूष्याः । दूषिः । असि । हेत्याः । हेतिः । असि । मेन्याः । मेनिः । असि । आप्नुहि । श्रेयांसम् । अति । समम् । क्राम ॥ १ ॥

स्रक्त्यः । असि । प्रतिऽसरः । असि । प्रतिऽअभिचरणः । असि । आप्नुहि । श्रेयांसम् । अति । समम् । क्राम ॥ २ ॥

प्रति । तम् । अभि । चर । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः । आप्नुहि । श्रेयांसम् । अति । समम् । क्राम ॥ ३ ॥

सूरिः । असि । वर्चःऽधाः । असि । तनूपानः । असि । आप्नुहि । श्रेयांसम् । अति । समम् । क्राम ॥ ४ ॥

शुक्रः । असि । भ्राजः । असि । स्वः । असि । ज्योतिः । असि । आप्नुहि । श्रेयांसम् । अति । समम् । क्राम ॥ ५ ॥

**II.10.8** The bounties of the Nature releasing the truthful Sun from the grip of the darkness have made him free from blemish. Thus I free you from the wretchedness of the hereditary disease, from the unpleasant consequences of attachment to women and from the noose of the venerable Lord. With my prayer I make you faultless. May both the heaven and earth be benevolent to you.

## Given in the Hymn

**II.11.1** You pollute the polluter. You are weapon of the missile. You are thunderbolt of thunder-bolt. Attain superiority. Surpass your equals.

**II.11.2** You are dynamic. You are pushing forward. You are counter-act of evil. Attain superiority. Surpass your equals.

**II.11.3** Move against him, who hates us and whom we do hate. Attain superiority. Surpass your equals.

**II.11.4** You are learned. You are full of lustre. You are protector of body. Attain superiority. Surpass your equals.

**II.11.5** You are bright. You are blazing. You are the light. You are illuminator. Attain superiority. Surpass your equals.

( १२ ) द्वादशं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्य भरद्वाज ऋषिः । द्यावापृथिव्यादिबहवो देवताः ।
(१, ३-६) प्रथमर्चस्तृतीयादिचतसृणाञ्च त्रिष्टुप्, (२) द्वितीयाया
जगती, (७-८) सप्तम्यष्टम्योश्चानुष्टुप् छन्दांसि ॥

द्यावापृथिवी उर्व१न्तरिक्षं क्षेत्रस्य पत्न्युरुगायोऽद्भुतः ।
उतान्तरिक्षमुरु वातगोपं त इह तप्यन्तां मयि तप्यमाने ॥१॥
इदं देवाः शृणुत ये यज्ञिया स्थ भरद्वाजो मह्यमुक्थानि शंसति ।
पाशे स बद्धो दुरिते नि युज्यतां यो अस्माकं मन इदं हिनस्ति ॥२॥
इदमिन्द्र शृणुहि सोमप यत्त्वा हृदा शोचता जोहवीमि ।
वृश्चामि तं कुलिशेनेव वृक्षं यो अस्माकं मन इदं हिनस्ति ॥३॥
अशीतिभिस्तिसृभिः सामगेभिरादित्येभिर्वसुभिरङ्गिरोभिः ।
इष्टापूर्तमवतु नः पितॄणामामुं ददे हरसा दैव्येन ॥४॥
द्यावापृथिवी अनु मा दीधीथां विश्वे देवासो अनु मा रभध्वम् ।
अङ्गिरसः पितरः सोम्यासः पापमार्छत्वपकामस्य कर्ता ॥५॥
अतीव यो मरुतो मन्यते नो ब्रह्म वा यो निन्दिषत्क्रियमाणम् ।
तपूंषि तस्मै वृजिनानि सन्तु ब्रह्मद्विषं द्यौरभिसंतपाति ॥६॥

द्यावापृथिवी इति । उरु । अन्तरिक्षम् । क्षेत्रस्य । पत्नी । उरुऽगायः । अद्भुतः ।
उत । अन्तरिक्षम् । उरु । वातऽगोपम् । ते । इह । तप्यन्ताम् । मयि । तप्यमाने ॥ १ ॥
इदम् । देवाः । शृणुत । ये । यज्ञियाः । स्थ । भरत्ऽवाजः । मह्यम् । उक्थानि । शंसति ।
पाशे । सः । बद्धः । दुःऽइते । नि । युज्यताम् । यः । अस्माकम् । मनः । इदम् । हिनस्ति ॥ २ ॥
इदम् । इन्द्र । शृणुहि । सोमऽप । यत् । त्वा । हृदा । शोचता । जोहवीमि ।
वृश्चामि । तम् । कुलिशेनऽइव । वृक्षम् । यः । अस्माकम् । मनः । इदम् । हिनस्ति ॥ ३ ॥
अशीतिऽभिः । तिसृऽभिः । सामऽगेभिः । आदित्येभिः । वसुऽभिः । अङ्गिरःऽभिः ।
इष्टापूर्तम् । अवतु । नः । पितॄणाम् । आ । अमुम् । ददे । हरसा । दैव्येन ॥ ४ ॥
द्यावापृथिवी इति । अनु । मा । आ । दीधीथाम् । विश्वे । देवासः । अनु । मा । आ । रभध्वम् ।
अङ्गिरसः । पितरः । सोम्यासः । पापम् । आ । ऋच्छतु । अपऽकामस्य । कर्ता ॥ ५ ॥
अतिऽइव । यः । मरुतः । मन्यते । नः । ब्रह्म । वा । यः । निन्दिषत् । क्रियमाणम् ।
तपूंषि । तस्मै । वृजिनानि । सन्तु । ब्रह्मऽद्विषम् । द्यौः । अभिऽसंतपाति ॥ ६ ॥

## Dyāvā-Pṛthivī-Midspace

**II.12.1** Heaven and earth, the vast midspace, the mistress of the universe, the wonderful wide-strider and the wind protected vast midspace, may all these be inflamed while I am inflamed.

## Divinities

**II.12.2** O enlightened ones, who are worthy of adoration may you listen. The offerer of food oblations sings your praises on my behalf. May he, who obstructs our such righteous intentions, be doomed to be bound in a deadly fetter.

## Indra

**II.12.3** O resplendent Lord, enjoyer of devotional bliss. May you listen to me, who invokes you with an anguished mind. Whosoever obstructs our this righteous thought, him I cut down like a tree with an axe.

## Āditya

**II.12.4** With two hundred forty (80x3) singers of Sāmān Chanters, with Ādityas, the Divasus, the Angirsas, let what is sacrificed and blessed by the elder fathers (Pitṛs) give full support to us, I take that man out of the grip of so called evil minded leaders of the society.

## Somyaḥ, Pitṛa

**II.12.5** May the heaven and earth be inflamed when I am inflamed. May all the enlightened ones be mobilized in my support, and so be the elders, luminous and enjoyers of devotional bliss. Let the doer of detestable deeds be doomed to death.

## Maruta

**II.12.6** O vital breaths, whosoever arrogates himself too much, and who reviles us or reviles our prayer that we make for him, may his mis-deeds be hot and scorching. May heaven turn its fury on the person who hates the virtuous.

सप्त प्राणानष्टौ मन्यस्तांस्ते वृश्चामि ब्रह्मणा ।
अया यमस्य सादनमग्निदूतो अरंकृतः ॥७॥
आ दधामि ते पदं समिद्धे जातवेदसि । अग्निः शरीरं वेवेष्ट्वसुं वागपि गच्छतु ॥८॥

सप्त । प्राणान् । अष्टौ । मन्यः । तान् । ते । वृश्चामि । ब्रह्मणा ।
अयाः । यमस्य । सदनम् । अग्निऽदूतः । अरम्ऽकृतः ॥ ७ ॥
आ । दधामि । ते । पदम् । सम्ऽइद्धे । जातऽवेदसि ।
अग्निः । शरीरम् । वेवेष्टु । असुम् । वाक् । अपि । गच्छतु ॥ ८ ॥

(१३) त्रयोदशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्विश्वे देवा वा देवताः । (१-३) प्रथमादितृचस्य त्रिष्टुप्, (४) चतुर्थ्या अनुष्टुप्, (५) पञ्चम्याश्च विराड्जगती छन्दांसि ॥

आयुर्दा अग्ने जरसं वृणानो घृतप्रतीको घृतपृष्ठो अग्ने ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रानभि रक्षतादिमम् ॥१॥
परि धत्त धत्त नो वर्चसेमं जरामृत्युं कृणुत दीर्घमायुः ।
बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवा उ ॥२॥
परीदं वासो अधिथाः स्वस्तयेभूर्गृष्टीनामभिशस्तिपा उ ।
शतं च जीव शरदः पुरूची रायश्च पोषमुपसंव्ययस्व ॥३॥
एह्यश्मानमा तिष्ठाश्मा भवतु ते तनूः ।
कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतम् ॥४॥

आयुःऽदाः । अग्ने । जरसम् । वृणानः । घृतऽप्रतीकः । घृतऽपृष्ठः । अग्ने । घृतम् ।
पीत्वा । मधु । चारु । गव्यम् । पिताऽइव । पुत्रान् । अभि । रक्षतात् । इमम् ॥ १ ॥
परि । धत्त । धत्त । नः । वर्चसा । इमम् । जराऽमृत्युम् । कृणुत । दीर्घम् । आयुः ।
बृहस्पतिः । प्र । अयच्छत् । वासः । एतत् । सोमाय । राज्ञे । परिऽधातवै । ऊं इति ॥२॥
परि । इदम् । वासः । अधिथाः । स्वस्तये । अभूः । गृष्टीनाम् । अभिशस्तिऽपाः । ऊं इति ।
शतम् । च । जीव । शरदः । पुरूचीः । रायः । च । पोषम् । उपऽसंव्ययस्व ॥ ३ ॥
आ । इहि । अश्मानम् । आ । तिष्ठ । अश्मा । भवतु । ते । तनूः ।
कृण्वन्तु । विश्वे । देवाः । आयुः । ते । शरदः । शतम् ॥ ४ ॥

**Yama-Sādanam:Brahman**

**II.12.7** With my prayer, I rend away your seven vital breaths (drawn through two eyes, two ears, two nostrils and one mouth opening) and eight marrows (one in each division of two arms and two legs) (sense-organs). Let you go to the abode of death welladorned, and with fire as your envoy.

**Agni**

**II.12.8** I hereby set your path into the raging fire. May the fire engulf you, your life and your speech also.

**II.13.1** O adorable Lord, you verily are the bestower of long life. May you bless this young boy to a long old age. O fire, with bright front and bright back, having enjoyed the sweet and pleasant melted butter of cow, may you guard this boy from all sides just as a father his sons. (investiture of a young boy of 18 years, prior to his marriage-go dānam)

**Bṛhaspati**

**II.13.2** Wrap this cloth around him. May you fill him with luster for us. Bless him with long life, so that he dies at a ripe old age only. The Lord supreme has provided this cloth for the blissful young man to put on. (investiture of bachelor Soma with garment).

**II.13.3** O man, you have wrapped this cloth around you for well-being. You have become the protector of people from evil influences. May you live a full span of hundred autumns, and put riches and nourishment on you.

**Nauture's All Bounties**

**II.13.4** O boy, come here and stand on this stone. May your body become hard as stone. May the bounties of Nature, make your life-span of a hundred autumns.

यस्य॑ ते॒ वास॑ः प्रथमवा॒स्यं॑१ हरा॑म॒स्तं त्वा॒ विश्वे॑ऽवन्तु दे॒वाः ।
तं त्वा॒ भ्रात॑रः सु॒वृधा॒ वर्ध॑मान॒मनु॑ जायन्तां ब॒हवः॑ सु॒जात॑म् ॥५॥

यस्य॑ । ते॒ । वास॑ः । प्र॒थ॒म॒ऽवा॒स्य॑म् । हरा॑मः । तम् । त्वा॒ । विश्वे॑ । अ॒व॒न्तु॒ । दे॒वाः ।
तम् । त्वा॒ । भ्रात॑रः । सु॒ऽवृधा॑ । वर्ध॑मानम् । अनु॑ । जा॒य॒न्ता॒म् । ब॒हवः॑ । सु॒ऽजात॑म् ॥५॥

( १४ ) चतुर्दशं सूक्तम्

(१-६) षड्ऋचस्यास्य सूक्तस्य चातन ऋषिः । शालाग्निर्मन्त्रोक्ता वा देवताः । (१, ३, ५-६) प्रथमातृतीयापञ्चमी-षष्ठीनामृचामनुष्टुप्, (२) द्वितीयाया भुरिगनुष्टुप्, (४) चतुर्थ्याश्चोपरिष्टाद्विराड्बृहती छन्दांसि ॥

नि॒ःसा॒लां धृ॒ष्णुं धि॒षण॑मेकवा॒द्यां जि॑घ॒त्स्व॑म् ।
सर्वा॒श्चण्ड॑स्य न॒प्त्यो॒ना॒शया॑मः स॒दान्वाः॑ ॥१॥

निर्वो॒ गो॒ष्ठाद॑जामसि॒ निरक्षा॒न्निरु॑पान॒सात् ।
निर्वो॑ मगु॒न्द्या॒ दुहितरो गृ॒हेभ्य॑श्चातयामहे ॥२॥

अ॒सौ यो अ॑ध॒राद्गृ॒हस्तत्र॑ सन्त्वरा॒य्यः॑ ।
तत्र॑ से॒दिर्न्यु॑च्यतु॒ सर्वा॑श्च यातुधा॒न्यः॑ ॥३॥

भू॒तप॑ति॒र्निर॑ज॒त्विन्द्र॑श्चे॒तः स॒दान्वाः॑ ।
गृ॒हस्य॑ बु॒ध्न आसी॑ना॒स्ता इन्द्रो॒ वज्रे॒णाधि॑ तिष्ठतु ॥४॥

यदि॒ स्थ क्षे॑त्रि॒याणां॒ यदि॑ वा॒ पुरु॑षेषिताः ।
यदि॒ स्थ दस्यु॑भ्यो जा॒ता नश्य॑ते॒तः स॒दान्वाः॑ ॥५॥

नि॒ःऽसा॒लाम् । धृ॒ष्णुम् । धि॒षण॑म् । ए॒क॒ऽवा॒द्याम् । जि॒घ॒त्ऽस्व॑म् ।
सर्वा॑ः । चण्ड॑स्य । न॒प्त्य॑ः । ना॒शया॑मः । स॒दान्वा॑ः ॥ १ ॥

निः । व॒ः । गो॒ऽस्थात् । अ॒जा॒म॒सि॒ । निः । अक्षा॑त् । निः । उ॒प॒ऽआ॒न॒सात् ।
निः । व॒ः । म॒गु॒न्द्याः॑ । दु॒हि॒त॒रः॒ । गृ॒हेभ्य॑ः । चा॒त॒या॒म॒हे॒ ॥ २ ॥

अ॒सौ । यः । अ॒ध॒रात् । गृ॒हः । तत्र॑ । स॒न्तु॒ । अ॒रा॒य्य॑ः ।
तत्र॑ । से॒दिः । नि । उ॒च्य॒तु॒ । सर्वा॑ः । च॒ । या॒तु॒ऽधा॒न्य॑ः ॥ ३ ॥

भू॒त॒ऽप॑तिः । निः । अ॒ज॒तु॒ । इन्द्र॑ः । च॒ । इ॒तः । स॒दान्वा॑ः ।
गृ॒हस्य॑ । बु॒ध्ने । आसी॑नाः । ताः । इन्द्र॑ः । वज्रे॑ण । अधि॑ । ति॒ष्ठ॒तु॒ ॥ ४ ॥

यदि॑ । स्थ । क्षे॒त्रि॒याणा॑म् । यदि॑ । वा॒ । पुरु॑षऽइषिताः ।
यदि॑ । स्थ । दस्यु॑ऽभ्यः । जा॒ताः । नश्य॑त । इ॒तः । स॒दा॒न्वा॒ः ॥ ५ ॥

## Agni

**II.13.5** May all the bounties of Nature protect you for whom we have brought this garment to wear for the first time. May many prospering brothers be born after you, who is one of good birth and always prospering.

## Agni-Bhutapāḥ-Indra

**II.14.1** The expeller (from house),the frightener, the overwhelmer, the harsh-voiced and the devourer, all these ever-bewailers, the grand daughters of wrathful one (caṇḍal), we hereby destroy.

**II.14.2** We drive you out of cow-stalls, out of the game-hall, out of the grain-store, O daughters of malignance, we drive you out of our homes.

**II.14.3** In the house, that is there down below, let these harbingers of poverty take shelter. Let the distress settle there as well as all the inflicters of pain.

**II.14.4** May the Lord of beings and resplendent Lord turn these ever-bewailers out of this place. May Indra, the resplendent Lord with his adamantine bolt destroy those, who wrongfully have taken the possession of the floor of this house.

**II.14.5** O infectious diseases (Sadānvāḥ) whether you are hereditary, or you have been conveyed by men (contagious) or you are sprung from back and vital strength, please vanish from here.

परि धामान्यासामाशुर्गाष्ठामिवासरन् ।
अजैषं सर्वानाजीन्वो नश्यतेतः सदान्वाः ॥६॥

परि । धामानि । आसाम् । आशुः । गाष्ठाम्ऽइव । असरन् ।
अजैषम् । सर्वान् । आजीन् । वः । नश्यत । इतः । सदान्वाः ॥ ६ ॥

( १५ ) पञ्चदशं सूक्तम्

(१-६) षड्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । प्राणापानायूंषि देवताः । त्रिपाद्गायत्री छन्दः ॥

यथा द्यौश्च पृथिवी च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः ॥१॥
यथाहश्च रात्री च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः ॥२॥
यथा सूर्यश्च चन्द्रश्च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः ॥३॥
यथा ब्रह्म च क्षत्रं च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः ॥४॥
यथा सत्यं चानृतं च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः ॥५॥
यथा भूतं च भव्यं च न बिभीतो न रिष्यतः । एवा मे प्राण मा बिभेः ॥६॥

यथा । द्यौः । च । पृथिवी । च । न । बिभीतः । न । रिष्यतः । एव । मे । प्राण । मा । बिभेः ॥ १ ॥

यथा । अहः । च । रात्री । च । न । बिभीतः । न । रिष्यतः । एव । मे । प्राण । मा । बिभेः ॥ २ ॥

यथा । सूर्यः । च । चन्द्रः । च । न बिभीतः । न । रिष्यतः । एव । मे । प्राण । मा । बिभेः ॥ ३ ॥

यथा । ब्रह्म । च । क्षत्रम् । च । न । बिभीतः । न । रिष्यतः । एव । मे । प्राण । मा । बिभेः ॥ ४ ॥

यथा । सत्यम् । च । अनृतम् । च । न । बिभीतः । न । रिष्यतः । एव । मे । प्राण । मा । बिभेः ॥ ५ ॥

यथा । भूतम् । च । भव्यम् । च । न । बिभीतः । न । रिष्यतः । एव । मे । प्राण । मा । बिभेः ॥ ६ ॥

**II.14.6** As a swift courser reaches its post, so I have gone over all their dwelling places. I have won all the battles against you, O infectious diseases, the Sadānvāḥ) vanish from here.

## Prāṇas: Vital breathings

**II.15.1** As both the heaven and the earth do not entertain any fear, nor do they suffer any harm, so, O my life-breath, Prāṇas, may you have no fear.

**II.15.2** As both day and night do not entertain any fear, nor do they suffer any harm, so O my life-breath may you have no fear.

**II.15.3** As both Sun and Moon do not entertain any fear, nor do they suffer any harm, so O my life-breath may you have no fear.

**II.15.4** As both the intellectual power (brahma) and the ruling power (ksatra do not entertain any fear, nor do they suffer any harm, so O my life-breath, may you have no fear.

**II.15.5** As both the true and the non - True do not entertain any fear, nor do they suffer any harm, so, O my life-breath, may you have no fear.

**II.15.6** As both the past and the future do not entertain any fear, nor do they suffer any harm, so, O my life-breath, may you have no fear.

## ( १६ ) षोडशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । प्राणापानायूंषि देवताः । (१, ३) प्रथमातृतीययोर्ऋचोरेकपदासुरी त्रिष्टुप्, (२) द्वितीयाया एकपदासुर्युष्णिक्, (४–५) चतुर्थीपञ्चम्योश्च द्विपदासुरी गायत्री छन्दांसि ॥

प्राणापानौ मृत्योर्मा पातं स्वाहा ॥१॥
द्यावापृथिवी उपश्रुत्या मा पातं स्वाहा ॥२॥
सूर्य चक्षुषा मा पाहि स्वाहा ॥३॥
अग्ने वैश्वानर विश्वैर्मा देवैः पाहि स्वाहा ॥४॥
विश्वम्भर विश्वेन मा भरसा पाहि स्वाहा ॥५॥

प्राणापानौ । मृत्योः । मा । पातम् । स्वाहा ॥ १ ॥

द्यावापृथिवी इति । उपऽश्रुत्या । मा । पातम् । स्वाहा ॥ २ ॥

सूर्य । चक्षुषा । मा । पाहि । स्वाहा ॥ ३ ॥

अग्ने । वैश्वानर । विश्वैः । मा । देवैः । पाहि । स्वाहा ॥ ४ ॥

विश्वम्ऽभर । विश्वेन । मा । भरसा । पाहि । स्वाहा ॥ ५ ॥

## ( १७ ) सप्तदशं सूक्तम्

(१–७) सप्तर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । प्राणापानायूंषि देवताः । (१–६) प्रथमादिषड्चामेकपदासुरी त्रिष्टुप्, (७) सप्तम्याश्चासुर्युष्णिक् छन्दसी ॥

ओजोस्योजो मे दाः स्वाहा ॥१॥ सहोसि सहो मे दाः स्वाहा ॥२॥
बलमसि बलं मे दाः स्वाहा ॥३॥ आयुरस्यायुर्मे दाः स्वाहा ॥४॥
श्रोत्रमसि श्रोत्रं मे दाः स्वाहा ॥५॥ चक्षुरसि चक्षुर्मे दाः स्वाहा ॥६॥
परिपाणमसि परिपाणं मे दाः स्वाहा ॥७॥

ओजः । असि । ओजः । मे । दाः । स्वाहा ॥ १ ॥

सहः । असि । सहः । मे । दाः । स्वाहा ॥ २ ॥

बलम् । असि । बलम् । मे । दाः । स्वाहा ॥ ३ ॥

आयुः । असि । आयुः । मे । दाः । स्वाहा ॥ ४ ॥

श्रोत्रम् । असि । श्रोत्रम् । मे । दाः । स्वाहा ॥ ५ ॥

चक्षुः । असि । चक्षुः । मे । दाः । स्वाहा ॥ ६ ॥

परिऽपानम् । असि । परिऽपानम् । मे । दाः । स्वाहा ॥ ७ ॥

**Prāṇa-apāna, Dyāvā-pṛthvī, Sūrya-Agni-Viśvambhara**

**II.16.1** O in-breath and out-breath, may both of you protect me from death. Svāhā. (hail)

**II.16.2** O heaven and earth, may both of you protect me with good hearing. Svāhā.

**II.16.3** O Sun, may you protect me with good vision. Svāhā.

**II.16.4** O fire-divine, leader of every one, may you protect me with all the bounties of Nature. Svāhā.

**II.16.5** O Lord, sustainer of all, may you protect me with all sorts of sustenance. Svāhā.

**Ojas**

**II.17.1** You are endeavour (ojas). May you bestow endeavour on me. Svāhā.

**II.17.2** You are endurance (sahas). May you bestow endurance on me. Svāhā.

**II.17.3** You are strength (balam). May you bestow strength on me. Svāhā.

**II.17.4** You are longevity (āyuḥ). May you bestow longevity on me. Svāhā.

**II.17.5** You are power of hearing (śrostra). May you bestow power of hearing on me. Svāhā.

**II.17.6** You are vision (cakṣuḥ). May you bestow vision on me. Svāhā.

**II.17.7** You are all-round protection (paripāṇam) bestow all-round protection on me. Svāhā.

( १८ ) अष्टादशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्य चातन ऋषिः । अग्निर्देवता । द्विपदा साम्नी बृहती छन्दः ॥

भ्रातृव्यक्षयणमसि भ्रातृव्यचातनं मे दाः स्वाहा ॥१॥
सपत्नक्षयणमसि सपत्नचातनं मे दाः स्वाहा ॥२॥
अरायक्षयणमस्यरायचातनं मे दाः स्वाहा ॥३॥
पिशाचक्षयणमसि पिशाचचातनं मे दाः स्वाहा ॥४॥
सदान्वाक्षयणमसि सदान्वाचातनं मे दाः स्वाहा ॥५॥

भ्रातृव्यऽक्षयणम् । असि । भ्रातृव्यऽचातनम् । मे । दाः । स्वाहा ॥ १ ॥
सपत्नऽक्षयणम् । असि । सपत्नऽचातनम् । मे । दाः । स्वाहा ॥ २ ॥
अरायऽक्षयणम् । असि । अरायऽचातनम् । मे । दाः । स्वाहा ॥ ३ ॥
पिशाचऽक्षयणम । असि । पिशाचऽचातनम् । मे । दाः । स्वाहा ॥ ४ ॥
सदान्वाऽक्षयणम् । असि । सदान्वाऽचातनम् । मे । दाः । स्वाहा ॥ ५ ॥

( १९ ) एकोनविंशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्देवता । (१–४) प्रथमादिचतसृणामेकावसाना निचृद्विषमा त्रिपदा गायत्री, (५) पञ्चम्याश्चैकावसाना भुरिग्विषमा त्रिपदा गायत्री छन्दसी ॥

अग्ने यत्ते तपस्तेन तं प्रति तप योऽस्मान्द्वेष्टि यं वयं द्विष्मः ॥१॥
अग्ने यत्ते हरस्तेन तं प्रति हर योऽस्मान्द्वेष्टि यं वयं द्विष्मः ॥२॥
अग्ने यत्तेऽर्चिस्तेन तं प्रत्यर्च योऽस्मान्द्वेष्टि यं वयं द्विष्मः ॥३॥
अग्ने यत्ते शोचिस्तेन तं प्रति शोच योऽस्मान्द्वेष्टि यं वयं द्विष्मः ॥४॥
अग्ने यत्ते तेजस्तेन तमतेजसं कृणु योऽस्मान्द्वेष्टि यं वयं द्विष्मः ॥५॥

अग्ने । यत् । ते । तपः । तेन । तम् । प्रति । तप । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ॥ १ ॥
अग्ने । यत् । ते । हरः । तेन । तम् । प्रति । हर । यः ०० ॥ २ ॥
अग्ने । यत् । ते । अर्चिः । तेन । तम् । प्रति । अर्च । यः ०० ॥ ३ ॥
अग्ने । यत् । ते । शोचिः । तेन । तम् । प्रति । शोच । यः ०० ॥ ४ ॥
अग्ने । यत् । ते । तेजः । तेन । तम् । अतेजसम् । कृणु । यः ०० ॥ ५ ॥

## Agni

**II.18.1** You are the destroyer of the cousinly enemy (bhrātṛvya) .Grant me that I may drive away the cousinly enemy. Svāhā.

**II.18.2** You are rival (sapatna) destroying.Grant me that I may drive away my rivals. Svāhā.

**II.18.3** You are the destroyer of such enemies as do not pay their due.Grant me that I may drive away the enemies who do not pay their due. Svāhā.

**II.18.4** You are the destroyer of blood-suckers. Grant me that I may drive away the blood-suckers. Svāhā.

**II.18.5** You are the destroyer of perpetual wailers. Grant me that I may drive away the perpetual wailers. Svāhā.

## Agni

**II.19.1** O fire-divine, whatever heat you have, with that may you burn hot towards him who hates us and whom we hate.

**II.19.2** O fire-divine, whatever rage (haras) you have, with that rage may you oppose him who hates us and whom we hate.

**II.19.3** O fire-divine, whatever glare (areiḥ), you have, with that may you glare towards him who hates us and whom we hate.

**II.19.4** O fire-divine, whatever burning (Śociḥ) you have, with that may you burn towards him who hates us and whom we hate.

**II.19.5** O fire-divine, whatever lustre (tejas) you have, with that may you make him lusterless (atejas),who hates us and whom we hate.

### ( २० ) विंशं सूक्तम्

(१–४) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । वायुर्देवता । (१–४) प्रथमादिचतसृणामृचामेकावसाना निचृद्विषमा त्रिपदा गायत्री, (५) पञ्चम्याश्चैकावसाना भुरिग्विषमा त्रिपदा गायत्री छन्दसी ॥

वायो यत्ते तपस्तेन तं प्रति तप योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥१॥
वायो यत्ते हरस्तेन तं प्रति हर योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥२॥
वायो यत्तेऽर्चिस्तेन तं प्रत्यर्च योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥३॥
वायो यत्ते शोचिस्तेन तं प्रति शोच योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥४॥
वायो यत्ते तेजस्तेन तमतेजसं कृणु योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥५॥

वायो इति । यत् । ते । तपः । तेन । तम् । प्रति । तप । यः ०० ॥ १ ॥

वायो इति । यत् । ते । हरः । तेन । तम् । प्रति । हर । यः ०० ॥ २ ॥

वायो इति । यत् । ते । अर्चिः । तेन । तम् । प्रति । अर्च । यः ०० ॥ ३ ॥

वायो इति । यत् । ते । शोचिः । तेन । तम् । प्रति । शोच । यः ०० ॥ ४ ॥

वायो इति । यत् । ते । तेजः । तेन । तम् । अतेजसम् । कृणु । यः ०० ॥ ५ ॥

### ( २१ ) एकविंशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । सूर्यो देवता । (१–४) प्रथमादिचतसृणामृचामेकावसाना निचृद्विषमा त्रिपदा गायत्री, (५) पञ्चम्याश्चैकावसाना भुरिग्विषमा त्रिपदा गायत्री छन्दसी ॥

सूर्य यत्ते तपस्तेन तं प्रति तप योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥१॥
सूर्य यत्ते हरस्तेन तं प्रति हर योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥२॥
सूर्य यत्तेऽर्चिस्तेन तं प्रत्यर्च योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥३॥
सूर्य यत्ते शोचिस्तेन तं प्रति शोच योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥४॥
सूर्य यत्ते तेजस्तेन तमतेजसं कृणु योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥५॥

सूर्य । यत् । ते । तपः । तेन । तम् । प्रति । तप । यः ०० ॥ १ ॥

सूर्य । यत् । ते । हरः । तेन । तम् । प्रति । हर । यः ०० ॥ २ ॥

सूर्य । यत् । ते । अर्चिः । तेन । तम् । प्रति । अर्च । यः ०० ॥ ३ ॥

सूर्य । यत् । ते । शोचिः । तेन । तम् । प्रति । शोच । । यः ०० ॥ ४ ॥

सूर्य । यत् । ते । तेजः । तेन । तम् । अतेजसम् । कृणु । यः ०० ॥ ५ ॥

## Vāyu -Wind

**II.20.1** O wind, whatever heat you have, with that heat may blow hot towards him, who hates us and whom we hate.

**II.20.2** O wind, whatever compelling force you have, with that may you compel him, who hates us and whom we hate.

**II.20.3** O wind, whatever glare you have, with that may you glare towards him, who hates us and whom we hate.

**II.20.4** O wind, whatever drying power you have, with that may you blow dry towards him, who hates us and whom we hate.

**II.20.5** O wind, whatever lustre you have, with that may you make him lusterless, who hates us and whom we hate.

## Sūrya-the Sun

**II.21.1** O Sun, whatever heat you have, with that may you shine hot towards him, who hates us and whom we hate.

**II.21.2** O Sun, whatever compelling force (haras) you have, with that may you compel him, who hates us and whom we hate.

**II.21.3** O Sun, whatever glare you have, with that may you glare towards him, who hates us and whom we hate.

**II.21.4** O Sun, whatever afflicting power you have, with that may you afflict him, who hates us and whom we hate.

**II.21.5** O Sun, whatever lustre (tejas) you have, with that may you make him lusterless, who hates us and whom we hate.

( २२ ) द्वाविंशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । चन्द्रमा देवता । (१–४) प्रथमादिचतसृणामृचामेकावसाना निचृद्विषमा त्रिपदा गायत्री, (५) पञ्चम्याश्चैकावसाना भुरिग्विषमा त्रिपदा गायत्री छन्दसी ॥

चन्द्र यत्ते तपस्तेन तं प्रति तप योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥१॥
चन्द्र यत्ते हरस्तेन तं प्रति हर योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥२॥
चन्द्र यत्तेऽर्चिस्तेन तं प्रत्यर्च योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥३॥
चन्द्र यत्ते शोचिस्तेन तं प्रति शोच योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥४॥
चन्द्र यत्ते तेजस्तेन तमतेजसं कृणु योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥५॥

चन्द्र । यत् । ते । तपः । तेन । तम् । प्रति । तप । यः ०० ॥ १ ॥
चन्द्र । यत् । ते । हरः । तेन । तम् । प्रति । हर । यः ०० ॥ २ ॥
चन्द्र । यत् । ते । अर्चिः । तेन । तम् । प्रति । अर्च । यः ०० ॥ ३ ॥
चन्द्र । यत् । ते । शोचिः । तेन । तम् । प्रति । शोच । यः ०० ॥ ४ ॥
चन्द्र । यत् । ते । तेजः । तेन । तम् । अतेजसम् । कृणु । यः ०० ॥ ५ ॥

( २३ ) त्रयोविंशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । आपो देवताः । (१–४) प्रथमादिचतसृणामृचामेकावसाना समविषमा त्रिपदा गायत्री, (५) पञ्चम्याश्च स्वराड्विषमा त्रिपदा गायत्री छन्दसी ॥

आपो यद्वस्तपस्तेन तं प्रति तपत योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥१॥
आपो यद्वो हरस्तेन तं प्रति हरत योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥२॥
आपो यद्वोऽर्चिस्तेन तं प्रत्यर्चत योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥३॥
आपो यद्वः शोचिस्तेन तं प्रति शोचत योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥४॥
आपो यद्वस्तेजस्तेन तमतेजसं कृणुत योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ॥५॥

आपः । यत् । वः । तपः । तेन । तम् । प्रति । तपत । यः ०० ॥ १ ॥
आपः । यत् । वः । हरः । तेन । तम । प्रति । हरत । यः ०० ॥ २ ॥
आपः । यत् । वः । अर्चिः । तेन । तम् । प्रति । अर्चत । यः ०० ॥ ३ ॥
आपः । यत् । वः । शोचिः । तेन । तम् । प्रति । शोचत । यः ०० ॥ ४ ॥
आपः । यत् । वः । तेजः । तेन । तम् । अतेजसम् । कृणुत । यः ०० ॥ ५ ॥

## Candra-Moon

**II.22.1** O moon, whatever tormenting force (tapas) you have, with that may you torment him who hates us and whom we hate.

**II.22.2** O moon, whatever compelling force (haras) you have, with that may you compel him, who hates us and whom we hate.

**II.22.3** O moon, whatever glare (arcis) you have, with that may you glare towards him, who hates us and whom we hate.

**II.22.4** O moon, whatever afflicting power (Śocis) you have, with that you afflict him, who hates us and whom we hate.

**II.22.5** O moon, whatever lustre (tejas) you have, with that may you make him lusterless, who hates us and whom we hate.

## Āpaḥ-Waters

**II.23.1** O waters, whatever tormenting force you have, with that may you torment him, who hates us and whom we hate.

**II.23.2** O waters, whatever compelling force you have with that may you compel him, who hates us and whom we hate.

**II.23.3** O waters, whatever glare you have, with that may you glare towards him, who hates us and whom we hate.

**II.23.4** O waters, whatever afflicting power you have, with that may you afflict him, who hates us and whom we hate.

**II.23.5** O waters, whatever lustre you have, with that may you make him lusterless, who hates us and whom we hate.

( २४ ) चतुर्विंशं सूक्तम्

(१–८) अष्टर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आयुर्देवता । (१–४) प्रथमादिचतसृणामृचां वैराजपरा पञ्चपदा पथ्यापङ्क्तिः ( तत्रापि (१–२) प्रथमाद्वितीययोः भुरिक् पुर उष्णिक्, (३–४) तृतीयाचतुर्थ्योः निचृत् पुरोदेवत्या पङ्क्तिः ), (५) पञ्चम्याश्चतुष्पदा बृहती, (६–८) षष्ठ्यादितृचस्य च चतुष्पदा भुरिग्बृहती छन्दांसि ॥

शेरभक शेरभ पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ॥१॥

शेवृधक शेवृध पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ॥२॥

म्रोकानुम्रोक पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ॥३॥

सर्पानुसर्प पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ॥४॥

जूर्णि पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनीः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ॥५॥

उपब्दे पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनीः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ॥६॥

अर्जुनि पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनीः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ॥७॥

भरूजि पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनीः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ॥८॥

शेरभक । शेरभ । पुनः । वः । यन्तु । यातवः । पुनः । हेतिः । किमीदिनः ।
यस्य । स्थ । तम् । अत्त । यः । वः । प्रऽअहैत् । तम् । अत्त । स्वा । मांसानि । अत्त ॥१॥
शेवृधक । शेवृध । पुनः । वः । यन्तु । यातवः । ०० ॥ २ ॥
म्रोक । अनुऽम्रोक । पुनः । वः । यन्तु । यातवः । ०० ॥ ३ ॥
सर्प । अनुऽसर्प । पुनः । वः । यन्तु । यातवः । ०० ॥ ४ ॥
जूर्णि । पुनः । वः । यन्तु । यातवः । पुनः । हेतिः । किमीदिनीः । ०० ॥ ५ ॥
उपब्दे । पुनः । वः । यन्तु । यातवः । ०० ॥ ६ ॥
अर्जुनि । पुनः । वः । यन्तु । यातवः । ०० ॥ ७ ॥
भरूजि । पुनः । वः । यन्तु । यातवः । ०० ॥८॥

## Brahmā

**II.24.1** O killer, O murderer Śerabhaka may your follower (śerabhaḥ) go back. May the missiles of the plunderer (kimidinaḥ) goback. May you eat him whose companion you are. May you eat him who has sent you here. May you eat your own flesh.

**II.24.2** O slayer in hiding, O slaughterer in hiding (śevṛdhaka), may your followers go back. May the weapon of the plunderer go back. May you eat him whose companion you are. May you eat him who has sent you here. May you eat your own flesh (svā māṅsān).

**II.24.3** O thief (mroka),may you and your followers (anumroka) go back. May the weapon of the plunderer go back. May you eat him whose you are. May you eat him who has sent you here. May you eat your own flesh.

**II.24.4** O reptile (sarpa),O crawler, may your follower (anusarpa) go back. May the weapon of the plunderer go back. May you eat him whose you are. May you eat him who has sent you here. May you eat your own flesh.

**II.24.5** O heat of fever (jūrṇi),may your after-effects go back. May the pain-giving weapon go back. May you eat him, whose you are. May you eat him who has sent you here. May you eat your own flesh.

**II.24.6** O delirium of fever, may your after-effects go back. May the delirium causing weapon go back. May you eat him whose you are. May you eat him who has sent you here. May you eat your own flesh.

**II.24.7** O pallidness of fever (arjuni), may your after effects go back. May the offensive weapon go back. May you eat him whose you are. May you eat him who has sent you. May you eat your own flesh.

**II.24.8** O burning heat of fever (bharūji),may your after effects go back. May the weakening weapon go back. May you eat him whose you are. May you eat him who has sent you. May you eat your own flesh.

( २५ ) पञ्चविंशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्य चातन ऋषिः । पृश्निपर्ण्योषधिर्देवता । (१–३, ५) प्रथमादितृचस्य पञ्चम्या ऋचश्चानुष्टुप्, (४) चतुर्थ्याश्च भुरिगनुष्टुप् छन्दसी ॥

शं नो देवी पृश्निपर्ण्यशं निर्ऋत्या अकः ।
उग्रा हि कण्वजम्भनी तामभक्षि सहस्वतीम् ॥१॥
सहमानेयं प्रथमा पृश्निपर्ण्यजायत ।
तयाहं दुर्णाम्नां शिरो वृश्चामि शकुनेरिव ॥२॥
अरायमसृक्पावानं यश्च स्फातिं जिहीर्षति ।
गर्भादं कण्वं नाशय पृश्निपर्णि सहस्व च ॥३॥
गिरिमेनाँ आ वेशय कण्वाञ्जीवितयोपनान् ।
तांस्त्वं देवि पृश्निपर्ण्यग्निरिवानुदहन्निहि ॥४॥
पराच एनान्प्र णुद कण्वाञ्जीवितयोपनान् ।
तमांसि यत्र गच्छन्ति तत्क्रव्यादो अजीगमम् ॥५॥

शम् । नः । देवी । पृश्निऽपर्णी । अशम् । निःऽऋत्यै । अकः ।
उग्रा । हि । कण्वऽजम्भनी । ताम् । अभक्षि । सहस्वतीम् ॥ १ ॥
सहमाना । इयम् । प्रथमा । पृश्निऽपर्णी । अजायत ।
तया । अहम् । दुःऽनाम्नाम् । शिरः । वृश्चामि । शकुनेःऽइव ॥ २ ॥
अरायम् । असृक्ऽपावानम् । यः । च । स्फातिम् । जिहीर्षति ।
गर्भऽअदम् । कण्वम् । नाशय । पृश्निऽपर्णि । सहस्व । च ॥ ३ ॥
गिरिम् । एनान् । आ । वेशय । कण्वान् । जीवितऽयोपनान् ।
तान् । त्वम् । देवि । पृश्निऽपर्णि । अग्निःऽइव । अनुऽदहन् । इहि ॥ ४ ॥
पराचः । एनान् । प्र । नुद । कण्वान् । जीवितऽयोपनान् ।
तमांसि । यत्र । गच्छन्ति । तत् । क्रव्यऽअदः । अजीगमम् ॥ ५ ॥

## Pṛśniparṇī

**II.25.1** The pṛśniparṇī (a plant with spotted leaves) with its divine qualities (devī) has done good (śaṁ) to us and bad (aśam) to wretchedness (nirṛti). She is a terrible destroyer of the roots of diseases, (kaṇva-jambhanī). That tonic herb I have used.

**II.25.2** This potent herb pṛśniparṇī was born in ancient times. With her I cut off the heads of notorious diseases as if the head of a bird.

**II.25.3** O pṛśniparṇī may you destroy the evil germ that sucks blood, and that wants to impede development, and the one that eats the embryo up, and may you be victorious.

**II.25.4** May you chase these life-destroying germs away to the mountains and then, O pṛśniparṇī with divine qualities, may you come here burning them like fire.

**II.25.5** May you drive away these life-destroying germs. Where the darknesses go, there I send the flesh eating germs.

( २६ ) षड्विंशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य सविता ऋषिः । पशवो देवता : (१-२) प्रथमाद्वितीययोस्त्रिष्टुप् , (३) तृतीयाया उपरिष्टाद्विराड्बृहती, (४) चतुर्थ्या भुरिगनुष्टुप्, (५) पञ्चम्याश्चानुष्टुप् छन्दांसि ॥

एह यन्तु पशवो ये परेयुर्वायुर्येषां सहचारं जुजोष ।
त्वष्टा येषां रूपधेयानि वेदास्मिन्तान्गोष्ठे सविता नि यच्छतु ॥१॥
इमं गोष्ठं पशवः सं स्रवन्तु बृहस्पतिरा नयतु प्रजानन् ।
सिनीवाली नयत्वाग्रमेषामाजग्मुषो अनुमते नि यच्छ ॥२॥
सं सं स्रवन्तु पशवः समश्वाः समु पूरुषाः ।
सं धान्यस्य या स्फातिः संस्राव्येण हविषा जुहोमि ॥३॥
सं सिञ्चामि गवां क्षीरं समाज्येन बलं रसम् ।
संसिक्ता अस्माकं वीरा ध्रुवा गावो मयि गोपतौ ॥४॥
आ हरामि गवां क्षीरमाहार्षं धान्यं रसम् ।
आहृता अस्माकं वीरा आ पत्नीरिदमस्तकम् ॥५॥

आ । इह । यन्तु । पशवः । ये । पराऽईयुः । वायुः । येषाम् । सहऽचारम् । जुजोष ।
त्वष्टा । येषाम् । रूपऽधेयानि । वेद । अस्मिन् । तान् । गोऽस्थे । सविता । नि ।
यच्छतु ॥ १ ॥

इमम् । गोऽस्थम् । पशवः । सम् । स्रवन्तु । बृहस्पतिः । आ । नयतु । प्रऽजानन् ।
सिनीवाली । नयतु । आ । अग्रम् । एषाम् । आऽजग्मुषः । अनुऽमते । नि । यच्छ ॥
सम् । सम् । स्रवन्तु । पशवः । सम् । अश्वाः । सम् । ऊं इति । पुरुषाः ।
सम् । धान्यस्य । या । स्फातिः । सम्ऽस्राव्येण । हविषा । जुहोमि ॥ ३ ॥
सम् । सिञ्चामि । गवाम् । क्षीरम् । सम् । आज्येन । बलम् । रसम् ।
सम्ऽसिक्ताः । अस्माकम् । वीराः । ध्रुवाः । गावः । मयि । गोऽपतौ ॥ ४ ॥
आ । हरामि । गवाम् । क्षीरम् । आ । अहार्षम् । धान्यम् । रसम् ।
आऽहृताः । अस्माकम् । वीराः । आ । पत्नीः । इदम् । अस्तकम् ॥ ५ ॥

## Paśus - Animals

**II.26.1** May those cattle, that have wandered away and whose company the wind enjoys, come back here. The supreme moulder (tvaṣṭṛ) knows their forms and figures (descriptions) . May the creator God guide them to this cow stall.

**II.26.2** May those cattle, come in streams together to the cow-stall. May the Lord Supreme knowing well guide them to this place. May the night of new moon (sinīvālī) lead their foremost homeward (agra). O night of full moon (anumati), may you secure them fast (in their cow-pen) that have come here.

**II.26.3** May the horses stream together, together the cattle and together the men also to this place. May the abundance of the grain stream to this place.I hereby offer the oblation that brings all together.

**II.26.4** I pour the abundant cow-milk, and together the strength-giving soup with melted butter. Our attendants, i.e., men who look after them, have equally been well-fed; and as such, are dependable, may the cows remain here with full trust in me accepting me (alone) as the Lord of cows (go-patau) .

**II.26.5** I bring the milk of cows.I have brought already the corn and the sap. Our young men have been brought and so are the wives to this house.

## ( २७ ) सप्तविंशं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्य कपिञ्जल ऋषिः । (१-५) प्रथमादिपञ्चर्चामोषधिः, (६) षष्ठ्या रुद्रः,
(७) सप्तम्याश्चेन्द्रो देवताः । अनुष्टुप् छन्दः ॥

**नेच्छत्रुः प्राशं जयाति सहमानाभिभूरसि । प्राशं प्रतिप्राशो जह्यरसान्कृण्वोषधे ॥१॥**
**सुपर्णस्त्वान्वविन्दत्सूकरस्त्वाखनन्नसा । प्राशं प्रतिप्राशो जह्यरसान्कृण्वोषधे ॥२॥**
**इन्द्रो ह चक्रे त्वा बाहावसुरेभ्य स्तरीतवे । प्राशं प्रतिप्राशो जह्यरसान्कृण्वोषधे ॥३॥**
**पाटामिन्द्रो व्याश्नादसुरेभ्य स्तरीतवे । प्राशं प्रतिप्राशो जह्यरसान्कृण्वोषधे ॥४॥**
**तयाहं शत्रून्त्साक्ष इन्द्रः सालावृकाँ इव । प्राशं प्रतिप्राशो जह्यरसान्कृण्वोषधे ॥५॥**
**रुद्र जलाषभेषज नीलशिखण्ड कर्मकृत् । प्राशं प्रतिप्राशो जह्यरसान्कृण्वोषधे ॥६॥**
**तस्य प्राशं त्वं जहि यो न इन्द्राभिदासति ।**
**अधि नो ब्रूहि शक्तिभिः प्राशि मामुत्तरं कृधि ॥७॥**

न । इत् । शत्रुः । प्राशम् । जयाति । सहमाना । अभिऽभूः । असि ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ १ ॥
सुऽपर्णः । त्वा । अनु । अविन्दत् । सूकरः । त्वा । अखनत् । नसा ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ २ ॥
इन्द्रः । ह । चक्रे । त्वा । बाहौ । असुरेभ्यः । स्तरीतवे ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ ३ ॥
पाटाम् । इन्द्रः । वि । आश्नात् । असुरेभ्यः । स्तरीतवे ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ ४ ॥
तया । अहम् । शत्रून् । साक्षे । इन्द्रः । सालावृकान्ऽइव ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ ५ ॥
रुद्र । जलाषऽभेषज । नीलऽशिखण्ड । कर्मऽकृत् ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ ६ ॥
तस्य । प्राशम् । त्वम् । जहि । यः । नः । इन्द्र । अभिऽदासति ।
अधि । नः । ब्रूहि । शक्तिऽभिः । प्राशि । माम् । उत्ऽतरम् । कृधि ॥ ७ ॥

## Oṣadhi - Herbs

**II.27.1** Let not the enemy win at any cost in his missile-throw, because you are resister and overwhelmer. May send a counter missile against the missile. O herb, make my rivals sapless, dull and flat.

**II.27.2** The eagle (suprṇa) mighty wings has found you out and the wild boar (sūkara) has dug you out with his muzzle (nasā) . May you send a counter-missile against the missile. O herb, make my rivals sapless, dull and flat.

**II.27.3** The resplendent one has put you on his arm for defence against evil forces. May you send a counter-missile against the missile. O herb, make my rivals sapless, dull and flat.

**II.27.4** The resplendent one has consumed the pāṭā herb for defence against evil forces. May you send a counter-missile against the missile. O herb, make my rivals sapless, dull and flat.

**II.27.5** With that herb I shall defeat the enemies just as the resplendent one defeats the wild wolves. May you send a counter speech against the speech (of my adversary). O herb, make my rivals sapless, dull and flat.

## Rudra

**II.27.6** O adult physician, Lord of healing balm, prescriber, black-haired, and expert and experienced in your work, may you send a counter-speech against the speech. O herb, make my rivals sapless, dull and flat.(Prāśa=speech, pratiprāśa=counter-speech, as in debates).

## Indra

**II.27.7** O resplendent Lord, may you turn away, the speech (slogans) of the person, my rival, to defeat us. May you encourage us with your might and make me superior in public debates. (Prāśī=debate)

( २८ ) अष्टाविंशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्य शम्भुर्ऋषिः । (१) प्रथमर्चो जरिमा आयुश्च, (२) द्वितीयाया मित्रावरुणौ, (३) तृतीयाया जरिमा, (४–५) चतुर्थीपञ्चम्योर्द्यावापृथिव्यादय आयुश्च देवताः । (१) प्रथमाया जगती, (२–४) द्वितीयादितृचस्य त्रिष्टुप्, (५) पञ्चम्याश्च भुरिक्त्रिष्टुप् छन्दांसि ॥

तुभ्यमेव जरिमन्वर्धतामयं मेममन्ये मृत्यवो हिंसिषुः शतं ये ।
मातेव पुत्रं प्रमना उपस्थे मित्र एनं मित्रियात्पात्वंहसः ॥१॥
मित्र एनं वरुणो वा रिशादा जरामृत्युं कृणुतां संविदानौ ।
तदग्निर्होता वयुनानि विद्वान्विश्वा देवानां जनिमा विवक्ति ॥२॥
त्वमीशिषे पशूनां पार्थिवानां ये जाता उत वा ये जनित्राः ।
मेमं प्राणो हासीन्मो अपानो मेमं मित्रा वधिषुर्मो अमित्राः ॥३॥
द्यौष्ट्वा पिता पृथिवी माता जरामृत्युं कृणुतां संविदाने ।
यथा जीवा अदितेरुपस्थे प्राणापानाभ्यां गुपितः शतं हिमाः ॥४॥
इममग्न आयुषे वर्चसे नय प्रियं रेतो वरुण मित्र राजन् ।
मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत् ॥५॥

तुभ्यम् । एव । जरिमन् । वर्धताम् । अयम् । मा । इमम् । अन्ये । मृत्यवः । हिंसिषुः । शतम् । ये ।
माताऽइव । पुत्रम् । प्रऽमनाः । उपऽस्थे । मित्रः । एनम् । मित्रियात् । पातु । अंहसः ॥ १ ॥
मित्रः । एनम् । वरुणः । वा । रिशादाः । जराऽमृत्युम् । कृणुताम् । सम्ऽविदानौ ।
तत् । अग्निः । होता । वयुनानि । विद्वान् । विश्वा । देवानाम् । जनिम । विवक्ति ॥ २ ॥
त्वम् । ईशिषे । पशूनाम् । पार्थिवानाम् । ये । जाताः । उत । वा । ये । जनित्राः ।
मा । इमम् । प्राणः । हासीत् । मो इति । अपानः । मा । इमम् । मित्राः । वधिषुः ।
मो इति । अमित्राः ॥ ३ ॥
द्यौः । त्वा । पिता । पृथिवी । माता । जराऽमृत्युम् । कृणुताम् । संविदाने इति सम्ऽविदाने ।
यथा । जीवाः । अदितेः । उपऽस्थे । प्राणापानाभ्याम् । गुपितः । शतम् । हिमाः ॥ ४ ॥
इमम् । अग्ने । आयुषे । वर्चसे । नय । प्रियम् । रेतः । वरुण । मित्रऽराजन् [?] ।
माताऽइव । अस्मै । अदिते । शर्म । यच्छ । विश्वे । देवाः । जरत्ऽअष्टिः । यथा । असत् ॥ ५ ॥

## Jarimā-Āyu

**II.28.1** Old age, may this child grow for you only. May deaths, for which there are hundreds, not harm him. May the friendly Lord (Mitra) protect him from the vicious designs of friends, just as and affectionate mother guards her son in her lap.

## Mitrā-Varuṇau

**II.28.2** May both the friendly Lord (Mitra) and the venerable Lord (Varuṇa) the destroyer of evil, fully accordant with each other, enable (this child to live long and then) die at a natural old age. Thus the adorable Lord, the donor, knowing all our actions, mobilizes the life-giving power of all the bounties of Nature.

## Jarimā-Āyu

**II.28.3** You are the sovereign of earthly creatures, which have been born or are yet to be born. May not the in-breath leave him, nor the out-breath. May not the friends and nor the enemies murder him.

## Dyāvā-Pṛthvī

**II.28.4** May heaven, your father and the earth, your the mother accordant with each other, enable you to die of old age only, so that you may live in the lap of the earth, well protected by inbreath (prāṇa) and out-breath (apāna) for a hundred winters. (śatam himāḥ).

**II.28.5** O fire-divine, may you lead this man to long life and splendour. O venerable and friendly Lord, may you equip him with coveted power of virility. O earth, like a mother may you provide him shelter. O all the bounties of Nature, may you arrange so that he reaches the good old age (jaradaṣti).

### ( २९ ) एकोनत्रिंशं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्याथर्वा ऋषिः । बहवो देवताः । (१) प्रथमाया अनुष्टुप्, (२-३, ५-७) द्वितीयातृतीययोः पञ्चम्यादितृचस्य च त्रिष्टुप्, (४) चतुर्थ्याश्च पराबृहती निचृत्प्रस्तारपङ्क्तिश्छन्दांसि ॥

पार्थिवस्य रसे देवा भगस्य तन्वो३ बले ।
आयुष्यमिस्मा अग्निः सूर्यो वर्च आ धाद्बृहस्पतिः ॥१॥
आयुरस्मै धेहि जातवेदः प्रजां त्वष्टरधिनिधेह्यस्मै ।
रायस्पोषं सवितरा सुवास्मै शतं जीवाति शरदस्तवायम् ॥२॥
आशीर्ण ऊर्जमुत सौप्रजास्त्वं दक्षं धत्तं द्रविणं सचेतसौ ।
जयं क्षेत्राणि सहसायमिन्द्र कृण्वानो अन्यानधरान्त्सपत्नान् ॥३॥
इन्द्रेण दत्तो वरुणेन शिष्टो मरुद्भिरुग्रः प्रहितो न आगन् ।
एष वां द्यावापृथिवी उपस्थे मा क्षुधन्मा तृषत् ॥४॥
ऊर्जमस्मा ऊर्जस्वती धत्तं पयो अस्मै पयस्वती धत्तम् ।
ऊर्जमस्मै द्यावापृथिवी अधातां विश्वे देवा मरुत ऊर्जमापः ॥५॥
शिवाभिष्टे हृदयं तर्पयाम्यनमीवो मोदिषीष्ठाः सुवर्चाः ।
सवासिनौ पिबतां मन्थमेतमश्विनो रूपं परिधाय मायाम् ॥६॥

पार्थिवस्य । रसे । देवाः । भगस्य । तन्वः । बले ।
आयुष्यम् । अस्मै । अग्निः । सूर्यः । वर्चः । आ । धात् । बृहस्पतिः ॥ १ ॥
आयुः । अस्मै । धेहि । जातऽवेदः । प्रजाम् । त्वष्टः । अधिऽनिधेहि । अस्मै ।
रायः । पोषम् । सवितः । आ । सुव । अस्मै । शतम् । जीवाति । शरदः । तव । अयम् ॥२॥
आऽशीः । नः । ऊर्जम् । उत । सौप्रजाःऽत्वम् । दक्षम् । धत्तम् । द्रविणम् । सऽचेतसौ ।
जयम् । क्षेत्राणि । सहसा । अयम् । इन्द्र । कृण्वानः । अन्यान् । अधरान् । सऽपत्नान् ॥ ३ ॥
इन्द्रेण । दत्तः । वरुणेन । शिष्टः । मरुत्ऽभिः । उग्रः । प्रऽहितः । नः । आ । अगन् ।
एषः । वाम् । द्यावापृथिवी इति । उपऽस्थे । मा । । क्षुधत् । मा । तृषत् ॥ ४ ॥
ऊर्जम् । अस्मै । ऊर्जस्वती इति । धत्तम् । पयः । अस्मै । पयस्वती इति । धत्तम् ।
ऊर्जम् । अस्मै । द्यावापृथिवी इति । अधाताम् । विश्वे । देवाः । मरुतः । ऊर्जम् । आपः ॥ ५ ॥
शिवाभिः । ते । हृदयम् । तर्पयामि । अनमीवः । मोदिषीष्ठाः । सुऽवर्चाः ।
सऽवासिनौ । पिबताम् । मन्थम् । एतम् । अश्विनोः । रूपम् । परिऽधाय । मायाम् ॥ ६ ॥

## Agni-Surya and Other Devatās

**II.29.1** O bounties of Nature, may Agni, the adorable Lord, Sūrya, the Sun, Brahaspati, the Lord supreme, bestow on the sacrificer a long life, eminence and lustre, that he is always available on this earth with physical fitness, and past deeds.

**II.29.2** O knower of all that is born (jātaveda) grant long life to this man. O supreme architect (tvaṣṭṛ) bless this man with progeny. O creator Lord, (savitr) bestow on this man riches and nourishment (rāyas-poṣa). May this devotee of yours live through a hundred autumns.

**II.29.3** May our Lord, pleased with our prayer, bestow on us vigour and good progeny, dexterity as well as riches. O resplendent one, may this sacrificer win the fields (kṣetra) and victory, with his might, putting other rivals under his feet (i.e.,under his subjugation).

**II.29.4** Granted by the resplendent Lord (Indra), guided by the venerable Lord (Varuṇa) and urged by the vital forces, this fierce one (ugra) has come to us. O heaven and earth, may this man never suffer from the hunger and thirst in your bosom (in your shelter).

**II.29.5** O both of you, rich in grains (food, ūrja) give him grains. O both of you, rich in milk (payasvati), give him milk (payas). May heaven and earth give him vigour (ūrja, energy) and may the vital forces (maruts) and the waters (āpaḥ) give strength to him.

**II.29.6** With beneficial preparations (śivābhiḥ). I shall satiate your heart. Let you live in joy, free from disease and full of lustre (suvarcas). Let both of you, living together, drink this churned up beverage and assume the form and the knowledge of twin divines (aśvins).

इन्द्र एतां संसृजे विद्धो अग्रं ऊर्जां स्वधामजरां सा त एषा ।
तया त्वं जीव शरदः सुवर्चा मा त आ सुस्रोद्भिषजस्ते अक्रन् ॥७॥

इन्द्रः । एताम् । सुसृजे । विद्धः । अग्रे । ऊर्जाम् । स्वधाम् । अजराम् । सा । ते । एषा ।
तया । त्वम् । जीव । शरदः । सुऽवर्चाः । मा । ते । आ । सुस्रोत् । भिषजः । ते । अक्रन् ॥ ७ ॥

( ३० ) त्रिंशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्य प्रजापतिर्ऋषिः । अश्विनौ देवते । (१) प्रथमायाः पथ्यापङ्क्तिः, (२, ४–५) द्वितीयाचतुर्थीपञ्चमीनामनुष्टुप्, (३) तृतीयायाश्च भुरिगनुष्टुप् छन्दांसि ॥

यथेदं भूम्या अधि तृणं वातो मथायति ।
एवा मथ्नामि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः ॥१॥

सं चेन्नयाथो अश्विना कामिना सं च वक्षथः ।
सं वां भगासो अग्मत सं चित्तानि समु व्रता ॥२॥

यत्सुपर्णा विवक्षवो अनमीवा विवक्षवः ।
तत्र मे गच्छताद्धवं शल्य इव कुल्मलं यथा ॥३॥

यदन्तरं तद्बाह्यं यद्बाह्यं तदन्तरम् ।
कन्यानां विश्वरूपाणां मनो गृभायौषधे ॥४॥

एयमगन्पतिकामा जनिकामोऽहमागमम् ।
अश्वः कनिक्रदद्यथा भगेनाहं सहागमम् ॥५॥

यथा । इदम् । भूम्याः । अधि । तृणम् । वातः । मथायति । एव । मथ्नामि । ते ।
मनः । यथा । माम् । कामिनी । असः । यथा । मत् । न । अपऽगाः । असः ॥ १ ॥
सम् । च । इत् । नयाथः । अश्विना । कामिना । सम् । च । वक्षथः ।
सम् । वाम् । भगासः । अग्मत । सम् । चित्तानि । सम् । ऊं इति । व्रता ॥ २ ॥
यत् । सुऽपर्णाः । विवक्षवः । अनमीवाः । विवक्षवः ।
तत्र । मे । गच्छतात् । हवम् । शल्यःऽइव । कुल्मलम् । यथा ॥ ३ ॥
यत् । अन्तरम् । तत् । बाह्यम् । यत् । बाह्यम् । तत् । अन्तरम् ।
कन्यानाम् । विश्वऽरूपाणाम् । मनः । गृभाय । ओषधे ॥ ४ ॥
आ । इयम् । अगन् । पतिऽकामा । जनिऽकामः । अहम् । आ । अगमम् ।
अश्वः । कनिक्रदत् । यथा । भगेन । अहम् । सह । आ । अगमम् ॥ ५ ॥

**II.29.7** Yielding to your devotional prayers, the resplendent one (Indra) prepared this beverage, invigorating, nourishing and age giving. Now it is yours. Enjoying this may you live long through autumns full of lustre. Let there be no leakage of your vital fluids. The physicians have the curative and life giving recipes furnished from you.

### Manas

**II.30.1** As the wind agitates this grass on the ground, so I inspire your heart, that you may be affectionate and loving to me and may never go away from me.

### Aśvinau

**II.30.2** O Aśvins, the twins divine, may you both lead together and unite her with him, with love and affection. O couple, the future target of both of you has become one and so are your plans, paths and intents also now one.

### Oṣadhi

**II.30.3** Where the birds of charming wings chirp and sing, free from disease and sickness, there let my call reach her ears, as an arrow reaches the target.

**II.30.4** Whatever is inside, let the same be outside, and whatever is outside, let the same be inside (the internal thinking in unison with external expressions). O medicinal herb, may you capture the hearts of all the beautiful maidens.

### Dampatī (Couples)

**II.30.5** Here she has come longing for a husband and in the way, desiring a wife have I come, like a loud-neighing horse, full of passion (towards a mare).

( ३१ ) एकत्रिंशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य काण्व ऋषिः। मही चन्द्रमा वा देवता। (१) प्रथमाया अनुष्टुप्, (२,४) द्वितीयाचतुर्थ्योरुपरिष्टाद्विराड्बृहती, (३,५) तृतीयापञ्चम्योश्चार्षी त्रिष्टुप् छन्दांसि ॥

इन्द्रस्य या मही दृषत्क्रिमेर्विश्वस्य तर्हणी।
तया पिनष्मि सं क्रिमीन्दृषदा खल्वाँ इव ॥१॥

दृष्टमदृष्टमतृहमथो कुरूरुमतृहम् ।
अल्गण्डून्त्सर्वाञ्छलुनान्क्रिमीन्वचसा जम्भयामसि ॥२॥

अल्गण्डून्हन्मि महता वधेन दूना अदूना अरसा अभूवन् ।
शिष्टानशिष्टान्नि तिरामि वाचा यथा क्रिमीणां नकिरुच्छिषातै ॥३॥

अन्वान्त्र्यं शीर्षण्य१मथो पार्ष्टेयं क्रिमीन् ।
अवस्कवं व्यध्वरं क्रिमीन्वचसा जम्भयामसि ॥४॥

ये क्रिमयः पर्वतेषु वनेष्वोषधीषु पशुष्वप्स्व१न्तः ।
ये अस्माकं तन्व१माविविशुः सर्वं तद्धन्मि जनिम क्रिमीणाम् ॥५॥

इन्द्रस्य । या । मही । दृषत् । क्रिमेः । विश्वस्य । तर्हणी ।
तया । पिनष्मि । सम् । क्रिमीन् । दृषदा । खल्वान्ऽइव ॥ १ ॥
दृष्टम् । अदृष्टम् । अतृहम् । अथो इति । कुरूरुम् । अतृहम् ।
अल्गण्डून् । सर्वान् । शलुनान् । क्रिमीन् । वचसा । जम्भयामसि ॥ २ ॥
अल्गण्डून् । हन्मि । महता । वधेन । दूनाः । अदूनाः । अरसाः । अभुवन् ।
शिष्टान् । अशिष्टान् । नि । तिरामि । वाचा । यथा । क्रिमीणाम् । नकिः । उत्ऽशिषातै ॥३॥
अनुऽआन्त्र्यम् । शीर्षण्यम् । अथो इति । पार्ष्टेयम् । क्रिमीन् ।
अवस्कवम् । विऽअध्वरम् । क्रिमीन् । वचसा । जम्भयामसि ॥ ४ ॥
ये । क्रिमयः । पर्वतेषु । वनेषु । ओषधीषु । पशुषु । अप्ऽसु । अन्तः । ये । अस्माकम् ।
तन्वम् । आऽविविशुः । सर्वम् । तत् । हन्मि । जनिम । क्रिमीणाम् ॥ ५ ॥

## Mahī (Earth)

**II.31.1** With the resplendent Lord's great grinding stone which is a sure crusher of all the worms, I crush the worms to bits, as they grind and pound vetches and entails with mill-stone.

## Against Worms (Krimī-jambhanam)

**II.31.2** I have crushed the visible as well as the invisible worm, I have crushed the kururu worms that crawl on earth. With the vaca herb, I hereby kill all the insects (alganda) that cause itching and the salunas that move very fast. (unidentified worms: Kururu, algandu "alandu", saluna)

**II.31.3** I strike the insects, causing itching, with the great destructive weapon. All those insects, struck and burnt have now become lifeless. With the vaca herb, I destroy the lame one, fast moving and sluggish, so that none of the insects remain alive.

**II.31.4** With the vaca herb, I destroy the worms that reside in bowels and intestines, in the head, or in the lungs, and the avaskavas and Borers worms that bounce and cause severe pain.

**II.31.5** The worms, that are found in the hilly regions, in the forests, inside the animals and in waters, and that have entered our bodies, I hereby destroy their entire generation.

### ( ३२ ) द्वात्रिंशं सूक्तम्

(१–६) षड्डृचस्यास्य सूक्तस्य काण्व ऋषिः । आदित्यो देवता । (१) प्रथमर्चस्त्रिपाद्भुरिग्गायत्री, (२–५) द्वितीयादिचतसृणामनुष्टुप्, (६) षष्ठ्याश्च चतुष्पान्निचृदुष्णिक् छन्दांसि ॥

उद्यन्नादित्यः क्रिमीन्हन्तु निम्रोचन्हन्तु रश्मिभिः ।
ये अन्तः क्रिमयो गवि ॥१॥
विश्वरूपं चतुरक्षं क्रिमिं सारङ्गमर्जुनम् ।
शृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिरः ॥२॥
अत्रिवद्वः क्रिमयो हन्मि कण्ववज्जमदग्निवत् ।
अगस्त्यस्य ब्रह्मणा सं पिनष्म्यहं क्रिमीन् ॥३॥
हतो राजा क्रिमीणामुतैषां स्थपतिर्हतः ।
हतो हतमाता क्रिमिर्हतभ्राता हतस्वसा ॥४॥
हतासो अस्य वेशसो हतासः परिवेशसः ।
अथो ये क्षुल्लका इव सर्वे ते क्रिमयो हताः ॥५॥
प्र ते शृणामि शृङ्गे याभ्यां वितुदायसि ।
भिनद्मि ते कुषुम्भं यस्ते विषधानः ॥६॥

उत्ऽयन् । आदित्यः । क्रिमीन् । हन्तु । निऽम्रोचन् । हन्तु । रश्मिऽभिः ।
ये । अन्तः । क्रिमयः । गवि ॥ १ ॥
विश्वऽरूपम् । चतुःऽअक्षम् । क्रिमिम् । सारङ्गम् । अर्जुनम् ।
शृणामि । अस्य । पृष्टीः । अपि । वृश्चामि । यत् । शिरः ॥ २ ॥
अत्रिऽवत् । वः । क्रिमयः । हन्मि । कण्वऽवत् । जमदग्निऽवत् ।
अगस्त्यस्य । ब्रह्मणा । सम् । पिनष्मि । अहम् । क्रिमीन् ॥ ३ ॥
हतः । राजा । क्रिमीणाम् । उत । एषाम् । स्थपतिः । हतः ।
हतः । हतऽमाता । क्रिमिः । हतऽभ्राता । हतऽस्वसा ॥ ४ ॥
हतासः । अस्य । वेशसः । हतासः । परिऽवेशसः ।
अथो इति । ये । क्षुल्लकाःऽइव । सर्वे । ते । क्रिमयः । हताः ॥ ५ ॥
प्र । ते । शृणामि । शृङ्गे इति । याभ्याम् । विऽतुदायसि ।
भिनद्मि । ते । कुषुम्भम् । यः । ते । विषऽधानः ॥ ६ ॥

## Ādityaḥ-the Sun

**II.32.1** May the Sun as He rises up, kill the worms with his rays, and also while setting let him kill the worms, let these rays destroy the worms that live within the cow.

**II.32.2** Of the worm, having all forms, having four eyes, and the speckled one and the whitish one, I break the ribs and I chop its head off.

**II.32.3** O worm, like Atri, like Kaṇva and like Jamadagni, I will crush you, like a good grinder and like blazing fire, I crush the worms thoroughly with the knowledge of cleanliness. (Atri=sanitation incharge; Kaṇva=health officer and Jamadagni=area inspector to keep his circle clean)

**II.32.4** The king of the worms has been killed, and their architect (chieftain) also is killed. The worm is killed, with its mother killed, brothers killed and sisters killed.

**II.32.5** Neighbours of this worm are killed, and killed are its acquaintances (further neighbours). Whosoever waṣ a smaller fry, the kṣullakās, all of them have been killed.

**II.32.6** I crush your both the antennas with which you torment others;and I pierce your vicious pouch, which is the store of your poison.

( ३३ ) त्रयस्त्रिंशं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः। यक्ष्मविबर्हणं देवता। (१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप्, (३) तृतीयाया ककुम्मत्यनुष्टुप्, (४) चतुर्थ्याश्चतुष्पाद्भुरिगुष्णिक्, (५) पञ्चम्या उपरिष्टाद्विराड्बृहती, (६) षष्ठ्या उष्णिग्गर्भा निचृदनुष्टुप्, (७) सप्तम्याश्च पथ्यापङ्क्तिश्छन्दांसि ॥

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि ।
यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ॥१॥
ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्यमंसाभ्यां बाहुभ्यां वि वृहामि ते ॥२॥
हृदयात्ते परि क्लोम्नो हलीक्ष्णात्पार्श्वाभ्याम् ।
यक्ष्मं मतस्नाभ्यां प्लीह्नो यक्नस्ते वि वृहामसि ॥३॥
आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोरुदरादधि ।
यक्ष्मं कुक्षिभ्यां प्लाशेर्नाभ्या वि वृहामि ते ॥४॥
ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।
यक्ष्मं भसद्यं श्रोणिभ्यां भासदं भंससो वि वृहामि ते ॥५॥
अस्थिभ्यस्ते मज्जभ्यः स्नावभ्यो धमनिभ्यः ।
यक्ष्मं पाणिभ्यामङ्गुलिभ्यो नखेभ्यो वि वृहामि ते ॥६॥

अक्षीभ्याम् । ते । नासिकाभ्याम् । कर्णाभ्याम् । छुबुकात् । अधि ।
यक्ष्मम् । शीर्षण्यम् । मस्तिष्कात् । जिह्वायाः । वि । वृहामि । ते ॥ १ ॥
ग्रीवाभ्यः । ते । उष्णिहाभ्यः । कीकसाभ्यः । अनूक्यात् ।
यक्ष्मम् । दोषण्यम् । अंसाभ्याम् । बाहुऽभ्याम् । वि । वृहामि । ते ॥ २ ॥
हृदयात् । ते । परि । क्लोम्नः । हलीक्ष्णात् । पार्श्वाभ्याम् ।
यक्ष्मम् । मतस्नाभ्याम् । प्लीह्नः । यक्नः । ते । वि । वृहामसि ॥ ३ ॥
आन्त्रेभ्यः । ते । गुदाभ्यः । वनिष्ठोः । उदरात् । अधि ।
यक्ष्मम् । कुक्षिऽभ्याम् । प्लाशेः । नाभ्याः । वि । वृहामि । ते ॥ ४ ॥
ऊरुऽभ्याम् । ते । अष्ठीवत्ऽभ्याम् । पार्ष्णिऽभ्याम् । प्रऽपदाभ्याम् ।
यक्ष्मम् । भसद्यम् । श्रोणिऽभ्याम् । भासदम् । भंससः । वि । वृहामि । ते ॥ ५ ॥
अस्थिऽभ्यः । ते । मज्जऽभ्यः । स्नावऽभ्यः । धमनिऽभ्यः ।
यक्ष्मम् । पाणिऽभ्याम् अङ्गुलिऽभ्यः । नखेभ्यः । वि । वृहामि । ते ॥ ६ ॥

## Expulsion of Yakṣmā - from all parts of the body

**II.33.1** Out of your two eyes, out of your two nostrils, out of your two ears, out of your mouth, out of your brain, and out of your tongue, I pluck off your wasting disease of head.

**II.33.2** Out of your two muscles of the neck (grīvā),out of your vains of the nape (uṣṇiha),out of the cartiledges of the ribs (ninasa),out of the spine (anūkya),out of the two shoulders (amsa) and joint of your two arms (bāhu),I pluck off your wasting disease of upper limbs (extremities) .

**II.33.3** Out of your heart (hṛdaya),out of your right lungs, (kloma) out of your intestine (halīkṣṇā),out of your two sides (pārśva), out of your two kidneys (matasnā),out of your spleen (pithā) and out of your liver (yakna),I pluck off your wasting disease.

**II.33.4** Out of your intestines (antra),out of your guts (gudā),out of your bowels (vaniṣṭha),out of your abdomen (udara),out of your two flanks (kukṣi),out of your mesentery (plāśa),and out of your naval (nābhi),I pluck off your wasting disease.

**II.33.5** Out of your two thighs (uru), out of your two knees (aṣṭhī), out of your two heals, (pārsṇi) out of your fore-parts of the feet (prapadā), out of your hips (bhasadya), and out of you loins (śroṇi), I pluck away your wasting disease of the rump loins rooted in the loins (also Ṛg. X.163.4) .

**II.33.6** Out of your bones (asthi), out of your marrows (majjā), out of your sinews (snāvu), out of your blood-vessels (dhamanī), out of your two hands (pāṇi), out of your fingers (anguli) and out of your nails (nakha), I pluck off your wasting disease.

अङ्गेअङ्गे लोम्निलोम्नि यस्ते पर्वणिपर्वणि ।
यक्ष्मं त्वचस्यं ते वयं कश्यपस्य वीबर्हेण विष्वञ्चं वि वृहामसि ॥७॥

अङ्गेऽअङ्गे । लोम्निऽलोम्नि । यः । ते । पर्वणिऽपर्वणि ।
यक्ष्मम् । त्वचस्यम् । ते । वयम् । कश्यपस्य । विऽबर्हेण । विष्वञ्चम् । वि । वृहामसि ॥ ७ ॥

( ३४ ) चतुस्त्रिंशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । (१) प्रथमर्चः पशुपतिः, (२) द्वितीयाया देवाः, (३) तृतीयाया अग्निर्विश्वकर्मा च, (४) चतुर्थ्या वायुः प्रजापतिश्च, (५) पञ्चम्याश्चाशीर्देवताः । त्रिष्टुप् छन्दः ॥

य ईशे पशुपतिः पशूनां चतुष्पदामुत यो द्विपदाम् ।
निष्क्रीतः स यज्ञियं भागमेतु रायस्पोषा यजमानं सचन्ताम् ॥१॥
प्रमुञ्चन्तो भुवनस्य रेतो गातुं धत्त यजमानाय देवाः ।
उपाकृतं शशमानं यदस्थात्प्रियं देवानामप्येतु पाथः ॥२॥
ये बध्यमानमनु दीध्याना अन्वैक्षन्त मनसा चक्षुषा च ।
अग्निष्टानग्रे प्र मुमोक्तु देवो विश्वकर्मा प्रजया संरराणः ॥३॥
ये ग्राम्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।
वायुष्टानग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संरराणः ॥४॥
प्रजानन्तः प्रति गृह्णन्तु पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् ।
दिवं गच्छ प्रति तिष्ठा शरीरैः स्वर्गं याहि पथिभिर्देवयानैः ॥५॥

यः । ईशे । पशुऽपतिः । पशूनाम् । चतुःऽपदाम् । उत । यः । द्विऽपदाम् ।
निःऽक्रीतः । सः । यज्ञियम् । भागम् । एतु । रायः । पोषाः । यजमानम् । सचन्ताम् ॥ १ ॥
प्रऽमुञ्चन्तः । भुवनस्य । रेतः । गातुम् । धत्त । यजमानाय । देवाः ।
उपऽआकृतम् । शशमानम् । यत् । अस्थात् । प्रियम् । देवानाम् । अपि । एतु । पाथः ॥ २ ॥
ये । बध्यमानम् । अनु । दीध्यानाः । अनुऽऐक्षन्त । मनसा । चक्षुषा । च ।
अग्निः । तान् । अग्रे । प्र । मुमोक्तु । देवः । विश्वऽकर्मा । प्रऽजया । सम्ऽरराणः ॥ ३ ॥
ये । ग्राम्याः । पशवः । विश्वऽरूपाः । विऽरूपाः । सन्तः । बहुऽधा । एकऽरूपाः ।
वायुः । तान् । अग्रे । प्र । मुमोक्तु । देवः । प्रजाऽपतिः । प्रऽजया । सम्ऽरराणः ॥ ४ ॥
प्रऽजानन्तः । प्रति । गृह्णन्तु । पूर्वे । प्राणम् । अङ्गेभ्यः । परि । आऽचरन्तम् ।
दिवम् । गच्छ । प्रति । तिष्ठ । शरीरैः । स्वःऽगम् । याहि । पथिऽभिः । देवऽयानैः ॥५॥

**II.33.7** Whatever all-pervading wasting disease has penetrated in your each and every limb (anga), each and every hair (loma), and each and every joint, (parva) that wasting disease of the skin (tvak), we hereby pluck off with the scattering rays of the Sun. (kaśyapa treatment).

### Lord of Cattle

**II.34.1** May the Lord of cattle and creatures (Paśupati), who rules over quadrupeds as well as bipeds, won over by our prayers, come to this part of the sacrifice. May rāyaspoṣa (riches and nourishment) in plenty favour the sacrificer.

### Divinities

**II.34.2** Every creature has been provided with reproductive potentiality. O bounties of Nature, may you grant success to the sacrificer (in procreation). Duly brought, righteously earned, good and pleasing, may all these offerings pass on to the enlightened ones.

### Agni-Visvakarman

**II.34.3** Among us, there are worshippers, who engrossed in deep meditation, could realize with their mental eye (manasā cakṣuṣā), that the victim, (the culprit) is seated in their own interior. May our foremost adorable (Agni), always happy and pleased with the creation, the Supreme Architect (Viśvakarman)- first of all (agniḥ tān agre), bless them with complete freedom (mumoktu).

### Vāyu-Prajāpatiḥ

**II.34.4** The tame cattle of all forms, though varied in appearance and colour, are, verily, one, and are of one common nature. May our Vitality-Personified Lord (Vāyu), Lord of Progeny (Prajāpati), happy and pleased with His creation, first of all (Vāyuh tān agre), bless them with complete freedom.

### Blessings

**II.34.5** May the realized ones, first of all, take the vital breath under their control from the limbs in which it has been circulating. Go to heaven, Stay firm with all the parts of your body. Attain the world of light and emancipation, following the path of the enlightened ones, (your predecessors).

### (३५) पञ्चत्रिंशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्याङ्गिरा ऋषिः । विश्वकर्मा देवता । (१) प्रथमर्चो बृहतीगर्भा त्रिष्टुप्, (२-३) द्वितीया-तृतीययोस्त्रिष्टुप्, (४-५) चतुर्थीपञ्चम्योश्च भुरिक्त्रिष्टुप् छन्दांसि ॥

ये भक्षयन्तो न वसून्यानृधुर्यानग्नयो अन्वतप्यन्त धिष्ण्याः ।
या तेषामवया दुरिष्टिः स्विष्टिं नस्तान्कृणवद्विश्वकर्मा ॥१॥
यज्ञपतिमृषय एनसाहुर्निर्भक्तं प्रजा अनुतप्यमानम् ।
मथव्यान्त्स्तोकानप यान्रराध सं नष्टेभिः सृजतु विश्वकर्मा ॥२॥
अदान्यान्त्सोमपान्मन्यमानो यज्ञस्य विद्वान्त्समये न धीरः ।
यदेनश्चकृवान्बद्ध एष तं विश्वकर्मन्प्र मुञ्चा स्वस्तये ॥३॥
घोरा ऋषयो नमो अस्त्वेभ्यश्चक्षुर्यदेषां मनसश्च सत्यम् ।
बृहस्पतये महिष द्युमन्नमो विश्वकर्मन्नमस्ते पाह्यस्मान् ॥४॥
यज्ञस्य चक्षुः प्रभृतिर्मुखं च वाचा श्रोत्रेण मनसा जुहोमि ।
इमं यज्ञं विततं विश्वकर्मणा देवा यन्तु सुमनस्यमानाः ॥५॥

ये । भक्षयन्तः । न । वसूनि । आनृधुः । यान् । अग्नयः । अनुऽअतप्यन्त । धिष्ण्याः ।
या । तेषाम् । अवऽयाः । दुःऽइष्टिः । सुऽइष्टिम् । नः । ताम् । कृणवत् । विश्वऽकर्मा ॥ १ ॥
यज्ञऽपतिम् । ऋषयः । एनसा । आहुः । निःऽभक्तम् । प्रऽजाः । अनुऽतप्यमानम् ।
मथव्यान् । स्तोकान् । अप । यान् । रराध । सम् । नः । तेभिः । सृजतु । विश्वऽकर्मा ॥ २ ॥
अदान्यान् । सोमऽपान् । मन्यमानः । यज्ञस्य । विद्वान् । समऽअये । न । धीरः ।
यत् । एनः । चकृऽवान् । बद्धः । एषः । तम् । विश्वऽकर्मन् । प्र । मुञ्च । स्वस्तये ॥ ३ ॥
घोराः । ऋषयः । नमः । अस्तु । एभ्यः । चक्षुः । यत् । एषाम् । मनसः । च । सत्यम् ।
बृहस्पतये । महिष । द्युऽमत् । नमः । विश्वऽकर्मन् । नमः । ते । पाहि । अस्मान् ॥ ४ ॥
यज्ञस्य । चक्षुः । प्रऽभृतिः । मुखम् । च । वाचा । श्रोत्रेण । मनसा । जुहोमि ।
इमम् । यज्ञम् । विऽततम् । विश्वऽकर्मणा । आ । देवाः । यन्तु । सुऽमनस्यमानाः ॥ ५ ॥

**√iśvakarman**

**II.35.1** Of course, we have been enjoying (wordly pleasures) but this has not contributed anything to our (real or spritual) prosperity. Theses ecclesiastical ritual ridden performances, held by us so sacred (dhiṣṇyaḥ) have expressed their regrets and distress (anu-atapyanta). We have been so far compounding with what was actually deficient or of low grade (duriṣṭiḥ). May Viśvakarman, Lord of all actions, take us away from all ill performances and direct us to right track (su-iṣṭi).

**II.35.2** The Seers (Ṛṣis, persons of penetrating insight) have publicly pronounced against the sacrificer, a person engrossed in sin. They have expressed their regret and are distressed about the future of (this sacrificer's) off-springs. What honeyed drops the sacrificer was deprived of, may the Lord of all-actions unite us now with them.

**II.35.3** Whosoever considers the drinkers of divine bliss (Somapān) unworthy of gifts is neither wise nor correct, though he may be skilled in the trade of sacrificial performances. Whatever sin this man has committed (under pressure) in bondage, release him from that O Supreme Architect for his well-being.

**II.35.4** The Seers in exterior appear to be awful (ghora). Homage to them, because their vision and the mind penetrates into the depths of truth. Our homage be to you, O Supreme Architect. May you protect us.

**II.35.5** To Him who is the eye of the sacrifice (yajñasyacakṣuḥ), and the mouth of the sacrifice and its sustenance (prabhṛtir mukham ca), I offer oblations with my speech (vācā), by hearing (śrotreṇa) and by my thinking (manasā). May the enlightened ones, with friendly inclinations, come to this sacrifice, which has been spread wide by the Supreme Architect (Viśvakramnā).

( ३६ ) षट्त्रिंशं सूक्तम्

(१–८) महर्षस्यास्य सूक्तस्य पतिवेदन ऋषिः । (१) प्रथमर्चोऽग्निः, (२) द्वितीयाया सोमादयः, (३) तृतीयाया अग्नीषोमौ, (४) चतुर्थ्या इन्द्रः, (५) पञ्चम्याः सूर्यः, (६) षष्ठ्या धनपतिः, (७) सप्तम्या हिरण्यं भगश्च, (८) अष्टम्याश्चौषधिर्देवताः । (१) प्रथमाया भुरिगनुष्टुप्, (२, ५–७) द्वितीयायाः पञ्चम्यादित्रयस्य चानुष्टुप्, (३–४) तृतीयाचतुर्थ्योस्त्रिष्टुप्, (८) अष्टम्याश्च निचृत्पुरउष्णिक् छन्दांसि ॥

आ नो॑ अग्ने सुम॒तिं सं॑भ॒लो ग॑मेदि॒मां कु॒मा॒रीं स॒ह नो॒ भगे॑न ।
जु॒ष्टा व॒रेषु॒ सम॑नेषु व॒ल्गुरो॒षं पत्या॒ सौभ॑गमस्त्व॒स्यै ॥१॥
सोम॑जुष्टं॒ ब्रह्म॑जुष्टमर्य॒म्णा संभृ॑तं॒ भग॑म् ।
धा॒तुर्दे॒वस्य॑ स॒त्येन॑ कृणोमि पति॒वेद॑नम् ॥२॥
इ॒यम॑ग्ने॒ नारी॒ पतिं॑ विदेष्ट॒ सोमो॒ हि राजा॑ सु॒भगां॑ कृणोति॑ ।
सु॒वा॑ना पु॒त्रान्महि॑षी भवाति ग॒त्वा पतिं॑ सु॒भगा॒ वि रा॑जतु ॥३॥
यथा॑ख॒रो म॑घवं॒श्चारु॑रे॒ष प्रि॒यो मृ॒गाणां॑ सु॒षदा॑ ब॒भूव॑ ।
ए॒वा भग॑स्य जु॒ष्टेयम॑स्तु॒ नारी॒ संप्रि॑या॒ पत्याविरा॑धयन्ती ॥४॥
भग॑स्य॒ नाव॒मा रो॑ह पू॒र्णामनु॑पदस्वतीम् ।
तयो॑प॒प्रता॑रय॒ यो व॒रः प्र॑तिका॒म्य॑ः ॥५॥

आ । न॒ः । अ॒ग्ने॒ । सु॒ऽम॒तिम् । स॒म्ऽभ॒लः । ग॒मे॒त् । इ॒माम् । कु॒मारीम् । स॒ह । न॒ः । भगे॑न ।
जु॒ष्टा । व॒रेषु॑ । सम॑नेषु । व॒ल्गुः । ओ॒षम् । पत्या॑ । सौभ॑गम् । अ॒स्तु॒ । अ॒स्यै ॥ १ ॥
सोम॑ऽजुष्टम् । ब्रह्म॑ऽजुष्टम् । अ॒र्य॒म्णा । सम्ऽभृ॑तम् । भग॑म् ।
धा॒तुः । दे॒वस्य॑ । स॒त्येन॑ । कृ॒णो॒मि॒ । प॒ति॒ऽवेद॑नम् ॥ २ ॥
इ॒यम् । अ॒ग्ने॒ । नारी॑ । पति॑म् । वि॒दे॒ष्ट॒ । सोम॑ः । हि । राजा॑ । सु॒ऽभगा॑म् । कृ॒णोति॑ ।
सु॒वा॑ना । पु॒त्रान् । महि॑षी । भ॒वा॒ति॒ । ग॒त्वा । पति॑म् । सु॒ऽभगा॑ । वि । रा॒ज॒तु॒ ॥ ३ ॥
यथा॑ । आ॒ऽख॒रः । म॒घ॒ऽव॒न् । चारु॑ः । ए॒षः । प्रि॒यः । मृ॒गाणा॑म् । सु॒ऽस॒दा॑ः । ब॒भूव॑ ।
ए॒व । भग॑स्य । जु॒ष्टा । इ॒यम् । अ॒स्तु॒ । नारी॑ । सम्ऽप्रि॑या । पत्या॑ । अवि॑ऽराधयन्ती ॥४॥
भग॑स्य । नाव॑म् । आ । रो॒ह॒ । पू॒र्णाम् । अनु॑पऽदस्वतीम् ।
तया॑ । उ॒प॒ऽप्रता॑रय । यः । व॒रः । प्र॒ति॒ऽका॒म्य॑ः ॥ ५ ॥

**Agniḥ**

**II.36.1** O adorable Lord, may a good youngman, sweet of tongue (sam-bhala) come to us (in the svayaṁvara) seeking this sweet-hearted maiden, and may he accept her along with gifts and riches (bhagena). May this girl, pleasing to the wooers and attractive and accomplished at the assemblies, be blessed with marital happiness in the company of this young man as her husband.

**Somaḥ, Aryaman and Dhātṛ**

**II.36.2** The emotionally supported (somajuṣṭa), scripture-supported (brahmajuṣṭa) and legally strengthened (aryamnā sambhṛtam), further blessed by moral and social code, fully satisfied from all sides, request for marriage (pativedanam) has been accepted.

**Agni-Soma pair**

**II.36.3** O foremost adorable Lord, may this woman select out a nice husband (in this svayamvara). May Soma Rajan, our Lord of Bliss, make her happy. May she be blessed with sons, may she be the Chief Lady of the household. May she have the privilege of leading peaceful and prosperous life in her husband's company.

**Indra**

**II.36.4** O bounteous Lord, as this beautiful cave or lair has become a comfortable resting place for animals, so may this woman enjoy marital bliss, always dear to and never disagreeing with her husband.

**Sūrya**

**II.36.5** May you embark upon the boat of marital bliss, which is full and faultless. With it let you get across to the husband (of your choice),who is worthy of you.

आ क्रन्दय धनपते वरमामनसं कृणु ।
सर्वं प्रदक्षिणं कृणु यो वरः प्रतिकाम्यः ॥६॥
इदं हिरण्यं गुल्गुल्वयमौक्षो अथो भगः ।
एते पतिभ्यस्त्वामदुः प्रतिकामाय वेत्तवे ॥७॥
आ ते नयतु सविता नयतु पतिर्यः प्रतिकाम्यः ।
त्वमस्यै धेह्योषधे ॥८॥

आ । क्रन्दय । धनऽपते । वरम् । आऽमनसम् । कृणु ।
सर्वम् । प्रऽदक्षिणम् । कृणु । यः । वरः । प्रतिऽकाम्यः ॥ ६ ॥
इदम् । हिरण्यम् । गुल्गुलु । अयम् । औक्षः । अथो इति । भगः ।
एते । पतिऽभ्यः । त्वाम् । अदुः । प्रतिऽकामाय । वेत्तवे ॥ ७ ॥
आ । ते । नयतु । सविता । नयतु । पतिः । यः । प्रतिऽकाम्यः ।
त्वम् । अस्यै । धेहि । ओषधे ॥ ८ ॥

॥ इति द्वितीयं काण्डम् ॥

## Dhanapati

**II.36.6** O Lord of wealth, may you call out to my beloved wooer. May you make him well inclined towards me. Offer all that you can to the husband of my choice (who is nice and worthy).

## Hiraṇyam Bhagaḥ

**II.36.7** This high quality gold, this fragrant bdellium, this cart drawn by bullocks and this wealth, we offer to husbands so that you may get a husband of your choice.

## Oṣadhī-herb

**II.36.8** May the inspirer Lord bring him here for you. May the husband, who is of your choice desirable, take you with him. O herb, give nourishment to her.

-----

Here ends Kāṇḍa-II

Hymns 36 - Verses 207

# अथ तृतीयं काण्डम् ॥

( १ ) प्रथमं सूक्तम्

(१-६) षड्चस्यास्य सूक्तस्याथर्वा ऋषिः। (१) प्रथमर्चोऽग्निः, (२) द्वितीयाया मरुतः, (३-६) तृतीयादिचतसृणाञ्चेन्द्रो देवताः। (१, ४) प्रथमाचतुर्थ्योस्त्रिष्टुप्, (२) द्वितीयाया विराड्गर्भा भुरिक्त्रिष्टुप्, (३, ६) तृतीयाषष्ठ्योरनुष्टुप्, (५) पञ्चम्याश्च विराट् पुरउष्णिक् छन्दांसि ॥

अग्निर्नः शत्रून्प्रत्येतु विद्वान्प्रतिदहन्नभिशस्तिमरातिम् ।
स सेनां मोहयतु परेषां निर्हस्तांश्च कृणवज्जातवेदाः ॥१॥
यूयमुग्रा मरुत ईदृशे स्थाभि प्रेत मृणत सहध्वम् ।
अमीमृणन्वसवो नाथिता इमे अग्निर्ह्येषां दूतः प्रत्येतु विद्वान् ॥२॥
अमित्रसेनां मघवन्नस्माञ्छत्रूयतीमभि ।
युवं तानिन्द्र वृत्रहन्नग्निश्च दहतं प्रति ॥३॥
प्रसूत इन्द्र प्रवता हरिभ्यां प्र ते वज्रः प्रमृणन्नेतु शत्रून् ।
जहि प्रतीचो अनूचः पराचो विष्वक्सत्यं कृणुहि चित्तमेषाम् ॥४॥

अग्निः । नः । शत्रून् । प्रति । एतु । विद्वान् । प्रतिऽदहन् । अभिऽशस्तिम् । अरातिम् ।
सः । सेनाम् । मोहयतु । परेषाम् । निःऽहस्तान् । च । कृणवत् । जातऽवेदाः ॥ १ ॥
युयम् । उग्राः । मरुतः । ईदृशे । स्थ । अभि । प्र । इत । मृणत । सहध्वम् ।
अमीमृणन् । वसवः । नाथिताः । इमे । अग्निः । हि । एषाम् । दुतः । प्रतिऽएतु । विद्वान् ॥ २ ॥
अमित्रऽसेनाम् । मघऽवन् । अस्मान् । शत्रुऽयतीम् । अभि ।
युवम् । ताम् । इन्द्र । वृत्रऽहन् । अग्निः । च । दहतम् । प्रति ॥ ३ ॥
प्रऽसूतः । इन्द्र । प्रऽवता । हरिऽभ्याम् । प्र । ते । वज्रः । प्रऽमृणन् । एतु । शत्रून् ।
जहि । प्रतीचः । अनूचः । पराचः । विष्वक् । सत्यम् । कृणुहि । चित्तम् । एषाम् ॥४॥

## Agni

**III.1.1** Let our army chief move against enemies knowing well their stratagems, burning against wide-spread violence and misery. May he confuse the hordes of enemy and knowing all, may he disarm them.(Agni=army chief)

## Marut

**III.1.2** O fierce storm-troopers (The Maruts), stand by us in such a terrible battle. Move forward, attack and over-whelm (the enemy). These Vasus (home guards) have attacked. Now the enemies are suppliant (and imploring for mercy). May the Army Chief, knowing each and every thing go forward to meet them as an envoy.( Maruts = Storm-troopers, rain-bringing clouds; man)

## Indra

**III.1.3** O bounteous king, against the army of enemies, which is moving like foes around us, may you, the resplendent, the destroyer of evil and the Army Chief, both burn up fiercely.

**III.1.4** O resplendent king, may your chariot drawn by two bay steeds move smooth and fast. May your bolt go forth slaying the enemies. Smite the on-coming, the following ones, that is coming from behind, and the fleeing far. Make their minds utterly confused. (Indra = resplendent king)

इन्द्र सेनां मोहयामित्राणाम् ।
अग्नेर्वातस्य ध्राज्या तान्विषूचो वि नाशय ॥५॥
इन्द्रः सेनां मोहयतु मरुतो घ्नन्त्वोजसा ।
चक्षूंष्यग्निरा दत्तां पुनरेतु पराजिता ॥६॥

इन्द्र । सेनाम् । मोहय । अमित्राणाम् ।
अग्नेः । वातस्य । ध्राज्या । तान् । विषूचः । वि । नाशय ॥ ५ ॥
इन्द्रः । सेनाम् । मोहयतु । मरुतः । घ्नन्तु । ओजसा ।
चक्षूंषि । अग्निः । आ । दत्ताम् । पुनः । एतु । पराऽजिता ॥ ६ ॥

( २ ) द्वितीयं सूक्तम्

(१–६) षड्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । (१–२) प्रथमाद्वितीययोर्ऋचोरग्निः, (३–४) तृतीयाचतुर्थ्योरिन्द्रः, (५) पञ्चम्या द्यौः, (६) षष्ठ्याश्च मरुतो देवताः । (१, ५–६) प्रथमापञ्चमीषष्ठीनां त्रिष्टुप्, (२–४) द्वितीयादितृचस्य चानुष्टुप् छन्दांसि ॥

अग्निर्नो दूतः प्रत्येतु विद्वान्प्रतिदहन्नभिशस्तिमरातिम् ।
स चित्तानि मोहयतु परेषां निर्हस्तांश्च कृणवज्जातवेदाः ॥१॥
अयमग्निरमूमुहद्यानि चित्तानि वो हृदि ।
वि वो धमत्वोकसः प्र वो धमतु सर्वतः ॥२॥
इन्द्र चित्तानि मोहयन्नर्वाङाकूत्या चर ।
अग्नेर्वातस्य ध्राज्या तान्विषूचो वि नाशय ॥३॥
व्याकूतय एषामिताथो चित्तानि मुह्यत ।
अथो यदद्यैषां हृदि तदेषां परि निर्जहि ॥४॥

अग्निः । नः । दूतः । प्रतिऽएतु । विद्वान् । प्रतिऽदहन् । अभिऽशस्तिम् । अरातिम् ।
सः । चित्तानि । मोहयतु । परेषाम् । निःऽहस्तान् । च । कृणवत् । जातऽवेदाः ॥ १ ॥
अयम् । अग्निः । अमूमुहत् । यानि । चित्तानि । वः । हृदि ।
वि । वः । धमतु । ओकसः । प्र । वः । धमतु । सर्वतः ॥ २ ॥
इन्द्र । चित्तानि । मोहयन् । अर्वाङ् । आऽकूत्या । चर ।
अग्ने । वातस्य । ध्राज्या । तान् । विषूचः । वि । नाशय ॥ ३ ॥
वि । आऽकूतयः । एषाम् । इत । अथो इति । चित्तानि । मुह्यत ।
अथो इति । यत् । अद्य । एषाम् । हृदि । तत् । एषाम् । परि । निः । जहि ॥ ४ ॥

**III.1.5** O resplendent king, throw the army of enemies into disorder. With the violent speed of fire and wind, destroy them fleeing in different directions.

**III.1.6** Let the resplendent king confound the army (of the enemies) and let the storm-troopers strike hard with vigour. Let the army Chief deprive it of vision. Let it go back completely defeated.

### Agni

**III.2.1** Let our army Chief moving forward as an envoy, knowing well, go forth burning, against wide-spread violence and misery. Let him, (confound minds of the enemies), the one who knows all, disarm them.

**III.2.2** The army Chief has confounded the thinking power whatever you have in your mind. Let him now drive you away out of your homes. Let him drive you away in all the directions.

### Indra

**III.2.3** O resplendent king, confounding the minds (of our enemies) let you move towards them with determination to destroy. With the violent speed of fire and wind, destroy them fleeing in different directions.

**III.2.4** O determinations ( of our enemies), go away. O minds (of our enemies), be confounded. Also whatever plan they have in their mind today, let you foil that completely.

अमीषां चित्तानि प्रतिमोहयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैर्ग्राह्यामित्रांस्तमसा विध्य शत्रून् ॥५॥
असौ या सेना मरुतः परेषामस्मानैत्यभ्योजसा स्पर्धमाना ।
तां विध्यत तमसापव्रतेन यथैषामन्यो अन्यं न जानात् ॥६॥

अमीषाम् । चित्तानि । प्रतिऽमोहयन्ती । गृहाण । अङ्गानि । अप्वे । परा । इहि । अभि ।
प्र । इहि । निः । दह । हृत्ऽसु । शोकैः । ग्राह्या अमित्रान् । तमसा । विध्य । शत्रून् ॥
असौ । या । सेना । मरुतः । परेषाम् । अस्मान् । आऽएति । अभि । ओजसा । स्पर्धमाना ।
ताम् । विध्यत । तमसा । अपऽव्रतेन । यथा । एषाम् । अन्यः । अन्यम् । न । जानात ॥

( ३ ) तृतीयं सूक्तम्

(१–६) षड्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्मन्त्रोक्ता वा देवताः । (१–२, ४) प्रथमाद्वितीयाचतुर्थीनामृचां त्रिष्टुप्, (३) तृतीयायाश्चतुष्पदा भुरिक्पङ्क्तिः, (५–६) पञ्चमीषष्ठयोश्चानुष्टुप् छन्दांसि ॥

अचिक्रदत्स्वपा इह भुवदग्ने व्यचस्व रोदसी उरूची ।
युञ्जन्तु त्वा मरुतो विश्ववेदस आमुं नय नमसा रातहव्यम् ॥१॥
दूरे चित्सन्तमरुषास इन्द्रमा च्यावयन्तु सख्याय विप्रम् ।
यद्गायत्रीं बृहतीमर्कमस्मै सौत्रामण्या दधृषन्त देवाः ॥२॥
अद्भ्यस्त्वा राजा वरुणो ह्वयतु सोमस्त्वा ह्वयतु पर्वतेभ्यः ।
इन्द्रस्त्वा ह्वयतु विड्भ्य आभ्यः श्येनो भूत्वा विश आ पतेमाः ॥३॥
श्येनो हव्यं नयत्वा परस्मादन्यक्षेत्रे अपरुद्धं चरन्तम् ।
अश्विना पन्थां कृणुतां सुगं त इमं सजाता अभिसंविशध्वम् ॥४॥

अचिक्रदत् । स्वऽपाः । इह । भुवत् । अग्ने । वि । अचस्व । रोदसी इति । उरूची
इति । युञ्जन्तु । त्वा । मरुतः । विश्वऽवेदसः । आ । अमुम् । नय । नमसा । रात-
ऽहव्यम् ॥ १ ॥
दूरे । चित् । सन्तम् । अरुषासः । इन्द्रम् । आ । च्यवयन्तु । सख्याय । विप्रम् ।
यत् । गायत्रीम् । बृहतीम् । अर्कम् । अस्मै । सौत्रामण्या । दधृषन्त । देवाः ॥ २ ॥
अत्ऽभ्यः । त्वा । राजा । वरुणः । ह्वयतु । सोमः । त्वा । ह्वयतु । पर्वतेभ्यः ।
इन्द्रः । त्वा । ह्वयतु । विट्ऽभ्यः । आभ्यः । श्येनः । भूत्वा । विशः । आ । पत । इमाः ॥३॥
श्येनः । हव्यम् । नयतु । आ । परस्मात् । अन्यऽक्षेत्रे । अपऽरुद्धम् । चरन्तम् ।
अश्विना । पन्थाम् । कृणुताम् । सुऽगम् । ते । इमम् । सऽजाताः । अभिऽसंविशध्वम् ॥ ४ ॥

### Dyauḥ

**III.2.5** O epidemic (or fear), Apvā confounding the minds of our enemies, seize their bodies and go away. Visit them again. Burn their hearts with sorrows. Pierce our enemies with gripping darkness. (Cf. Ṛg. X.103.12),( Also Yu. XVII.1, 4 (with variation).Apvā = Sickness ; fear ; one who presides over ).

### Marutaḥ

**III.2.6** There comes the army of enemies challenging our might. May you pierce it with confounding darkness so that none of them may recognize the other.

### Agni

**III.3.1** O Army Chief, he (the exiled king) calls on you. May he be of good conduct. Fill the specious heaven and earth ( with your forces). Let the all-winning storm-troopers the Maruts, join you. With homage here may you bring him, who is worthy of tributes.

**III.3.2** Though he be far away, may the unwounded (aruṣasaḥ) soldiers bring the wise resplendent king for friendship. For, the enlightened ones have arranged to receive him with Gāyatrī and Bṛahatī praise-songs under full security measures.

**III.3.3** May the venerable Lord, the sovereign, call you here from across the oceans; may the blissful Lord call you here from the mountains; may the resplendent Lord call you here to these people (to receive help from you). May you fly to these people (as if) becoming a hawk.(Varuṇa = Venerable Lord; Soma = Blissful Lord; Indra = Resplendent Lord)

**III.3.4** From far away, here may the Lord of excellent speed bring him, who is worthy of being invited, but at present is moving on alien land as an exile. May the divine twin-riders make your path easy. O kinsmen, let you join and group around him.

ह्वयन्तु त्वा प्रतिजनाः प्रति मित्रा अवृषत ।
इन्द्राग्नी विश्वे देवास्ते विशि क्षेममदीधरन् ॥५॥
यस्ते हवं विवदत्सजातो यश्च निष्ट्यः ।
अपाञ्चमिन्द्र तं कृत्वाथेममिहाव गमय ॥६॥

ह्वयन्तु । त्वा । प्रतिऽजनाः । प्रति । मित्राः । अवृषत ।
इन्द्राग्नी इति । विश्वे । देवाः । ते । विशि । क्षेमम् । अदीधरन् ॥ ५ ॥
यः । ते । हवम् । विऽवदत् । सऽजातः । यः । च । निष्ट्यः ।
अपाञ्चम् । इन्द्र । तम् । कृत्वा । अथ । इमम् । इह । अव । गमय ॥ ६ ॥

( ४ ) चतुर्थं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्याथर्वा ऋषिः । इन्द्रो देवता । (१) प्रथमर्चो जगती, (२-३, ६-७) द्वितीयातृतीयाषष्ठीसप्तमीनां त्रिष्टुप्, (४-५) चतुर्थीपञ्चम्योश्च भुरिक्त्रिष्टुप् छन्दांसि ॥

आ त्वा गन्राष्ट्रं सह वर्चसोदिहि प्राङ्विशां पतिरेकराट् त्वं वि राज ।
सर्वास्त्वा राजन्प्रदिशो ह्वयन्तूपसद्यो नमस्योऽ भवेह ॥१॥
त्वां विशो वृणतां राज्याय त्वामिमाः प्रदिशः पञ्च देवीः ।
वर्ष्मन्राष्ट्रस्य ककुदि श्रयस्व ततो न उग्रो वि भजा वसूनि ॥२॥
अच्छ त्वा यन्तु हविनः सजाता अग्निर्दूतो अजिरः सं चरातै ।
जायाः पुत्राः सुमनसो भवन्तु बहुं बलिं प्रति पश्यासा उग्रः ॥३॥
अश्विना त्वाग्रे मित्रावरुणोभा विश्वे देवा मरुतस्त्वा ह्वयन्तु ।
अधा मनो वसुदेयाय कृणुष्व ततो न उग्रो वि भजा वसूनि ॥४॥

आ । त्वा । गन् । राष्ट्रम् । सह । वर्चसा । उत् । इहि । प्राङ् । विशाम् । पतिः । एकऽराट् । त्वम् । वि । राज । सर्वाः । त्वा । राजन् । प्रऽदिशः । ह्वयन्तु । उपऽसद्यः । नमस्यः । भव । इह ॥ १ ॥
त्वाम् । विशः । वृणताम् । राज्याय । त्वाम् । इमाः । प्रऽदिशः । पञ्च । देवीः ।
वर्ष्मन् । राष्ट्रस्य । ककुदि । श्रयस्व । ततः । नः । उग्रः । वि । भज । वसूनि ॥ २ ॥
अच्छ । त्वा । यन्तु । हविनः । सऽजाताः । अग्निः । दूतः । अजिरः । सम् । चरातै ।
जायाः । पुत्राः । सुऽमनसः । भवन्तु । बहुम् । बलिम् । प्रति । पश्यासै । उग्रः ॥ ३ ॥
अश्विना । त्वा । अग्रे । मित्रावरुणा । उभा । विश्वे । देवाः । मरुतः । त्वा । ह्वयन्तु ।
अध । मनः । वसुऽदेयाय । कृणुष्व । ततः । नः । उग्रः । वि । भज । वसूनि ॥ ४ ॥

**III.3.5** May people invite you to come back. May your friends strengthen you. May the lord resplendent and adorable, and all the bounties of Nature keep you safe and secure amidst your people.(Indrāgnī = Lord resplendent and adorable viśvedevaḥ = All the bounties of Nature).

**III.3.6** Whose disputes your being called back, May he be a kinsman or an outsider, O resplendent one, after driving him away, may you reinstate this man here.

## Indraḥ

**III.4.1** To you has come the kingdom. Rise up with lusture. First become the lord of people. There-after may you shine as the only sovereign. O prince, may all the quarters (all regions, accept you (as their lord), (and none else). May you be approachable as well as revered here.

**III.4.2** May people select you for kingship and so may these five celestial regions. Stay at the apex in the body politic of the kingdom. Thereafter, becoming formidable (unchallengable), may you distribute riches among us.

**III.4.3** May your kinsmen come forward to you with offerings. May the army Chief go with you as your herald at your command. May your wives and sons be friendly-minded. May you, the formidable, see plenty of tributes being brought.

**III.4.4** May the Aśvīnau (twin-riders) first of all call upon you,so may both the Mitra (Lord of measures);and the Varuṇa (venerable);may all the enlightened ones and the storm-troopers accept you as king. Then, O prince,make up your mind to give wealth (to the needy). Thereafter, becoming formidable, may you distribute riches among us.(Aśvins = twin riders).

आ प्र द्रव परमस्याः परावतः शिवे ते द्यावापृथिवी उभे स्ताम् ।
तदयं राजा वरुणस्तथाह स त्वायमह्वत्स उपेदमेहि ॥५॥
इन्द्रेन्द्र मनुष्या३ः परेहि सं ह्यज्ञास्था वरुणैः संविदानः ।
स त्वायमह्वत्स्वे सधस्थे स देवान्यक्षत्स उ कल्पयाद्विशः ॥६॥
पथ्या रेवतीर्बहुधा विरूपाः सर्वाः संगत्य वरीयस्ते अक्रन् ।
तास्त्वा सर्वाः संविदाना ह्वयन्तु दशमीमुग्रः सुमना वशेह ॥७॥

आ । प्र । द्रव । परमस्याः । पराऽवतः । शिवे इति । ते । द्यावापृथिवी इति । उभे इति । स्ताम् ।
तत् । अयम् । राजा । वरुणः । तथा । आह । सः । त्वा । अयम् । अह्वत् । सः । उप । इदम् ।
आ । इहि ॥ ५ ॥

इन्द्रऽइन्द्र । मनुष्याः । परा । इहि । सम् । हि । अज्ञास्थाः । वरुणैः । सम्ऽविदानः ।
सः । त्वा । अयम् । अह्वत् । स्वे । सधऽस्थे । सः । देवान् । यक्षत् । सः । ऊं इति । कल्पयात् ।
विशः ॥ ६ ॥

पथ्याः । रेवतीः । बहुऽधा । विऽरूपाः । सर्वाः । सम्ऽगत्य । वरीयः । ते । अक्रन् । ताः ।
त्वा । सर्वाः । सम्ऽविदानाः । ह्वयन्तु । दशमीम् । उग्रः । सुऽमनाः । वश३ । इह ॥७॥

( ५ ) पञ्चमं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्याथर्वा ऋषिः । सोमः पर्णमणिर्वा देवता । (१) प्रथमर्चः पुरोऽनुष्टुप्त्रिष्टुप्, (२-३, ५-७) द्वितीयातृतीययोः पञ्चम्यादितृचस्य चानुष्टुप्, (४) चतुर्थ्यास्त्रिष्टुप्, (८) अष्टम्याश्च विराडुरोबृहती छन्दांसि ॥

आयमगन्पर्णमणिर्बली बलेन प्रमृणन्त्सपत्नान् ।
ओजो देवानां पय ओषधीनां वर्चसा मा जिन्वत्वप्रयावन् ॥१॥
मयि क्षत्रं पर्णमणे मयि धारयताद्रयिम् ।
अहं राष्ट्रस्याभीवर्गे निजो भूयासमुत्तमः ॥२॥

आ । अयम् । अगन् । पर्णऽमणिः । बली । बलेन । प्रऽमृणन् । सऽपत्नान् ।
ओजः । देवानाम् । पयः । ओषधीनाम् । वर्चसा । मा । जिन्वतु । अप्रऽयावन् ॥ १ ॥
मयि । क्षत्रम् । पर्णऽमणे । मयि । धारयतात् । रयिम् ।
अहम् । राष्ट्रस्य । अभिऽवर्गे । निऽजः । भूयासम् । उत्ऽतमः ॥ २ ॥

**III.4.5** Rush on this place from farther even than the farthest distance. May both heaven and earth be gracious to you. So this illustrious Varuṇa (the Police-Chief) has said. As such, he has invited you. Do come to this place (at once).

**III.4.6** O king of kings, may you come to all the ranks of your men. Having full concord with the Varuṇa (Police-Chief and Police officers) , you are aware of this invitation. As such he has invited you to his own office, his own residence . He has adored the enlighted ones. He will also manoeuvre and guide the people.

**III.4.7** People law-abiding, wealthy and of widely different opinions, all have joined hands for doing great good to you. May all of them, in full concord with each other accept you. may you stay here friendly, strong and kind, up to the tenth decade (of your life).

### Somaḥ - Parṇa-Maṇiḥ

**III.5.1** This parna jewel (ampoule or capsule), full of power has come to me, ruining my rivals with its power. Vigour of the bounties of Nature, and essence of the medicinal plants, may this fill me with lustre constantly.(Parṇa-maṇiḥ = a medicinal tablet prepared from the extract of the parṇa leaf. These maṇis are to be used by patients in the form of a tablet or capsule.)

**III.5.2** O parṇa-ampoule, tablet (or capsule), may you lay ruling power as well as riches in me. In domination of my country, may I be alone (unrivalled) and supreme. (Maṇi = Capsule or a gelatine type of case for a dose of medicine or drug.)

यं निदधुर्वनस्पतौ गुह्यं देवाः प्रियं मणिम् ।
तमस्मभ्यं सहायुषा देवा ददतु भर्तवे ॥३॥
सोमस्य पर्णः सह उग्रमागन्निन्द्रेण दत्तो वरुणेन शिष्टः ।
तं प्रियासं बहु रोचमानो दीर्घायुत्वाय शतशारदाय ॥४॥
आ मारुक्षत्पर्णमणिर्मह्या अरिष्टतातये ।
यथाहमुत्तरोसान्यर्यम्ण उत संविदः ॥५॥
ये धीवानो रथकाराः कर्मारा ये मनीषिणः ।
उपस्तीन्पर्ण मह्यं त्वं सर्वान्कृण्वभितो जनान् ॥६॥
ये राजानो राजकृतः सूता ग्रामण्यश्च ये ।
उपस्तीन्पर्ण मह्यं त्वं सर्वान्कृण्वभितो जनान् ॥७॥
पर्णोऽसि तनूपानः सयोनिर्वीरो वीरेण मया ।
संवत्सरस्य तेजसा तेन बध्नामि त्वा मणे ॥८॥

यम् । निऽदधुः । वनस्पतौ । गुह्यम् । देवाः । प्रियम् । मणिम् ।
तम् । अस्मभ्यम् । सह । आयुषा । देवाः । ददतु । भर्तवे ॥ ३ ॥
सोमस्य । पर्णः । सहः । उग्रम् । आ । अगन् । इन्द्रेण । दत्तः । वरुणेन । शिष्टः ।
तम् । प्रियासम् । बहु । रोचमानः । दीर्घायुऽत्वाय । शतऽशारदाय ॥ ४ ॥
आ । मा । अरुक्षत् । पर्णऽमणिः । मह्यै । अरिष्टऽतातये ।
यथा । अहम् । उत्तरः । असानि । अर्यम्णः । उत । समऽविदः ॥ ५ ॥
ये । धीवानः । रथऽकाराः । कर्माराः । ये । मनीषिणः ।
उपऽस्तीन् । पर्ण । मह्यम् । त्वम् । सर्वान् । कृणु । अभितः । जनान् ॥ ६ ॥
ये । राजानः । राजऽकृतः । सूताः । ग्रामऽन्यः । च । ये ।
उपऽस्तीन् । पर्ण । मह्यम् । त्वम् । सर्वान् । कृणु । अभितः । जनान् ॥ ७ ॥
पर्णः । असि । तनूऽपानः । सऽयोनिः । वीरः । वीरेण । मया ।
समऽवत्सरस्य । तेजसा । तेन । बध्नामि । त्वा । मणे ॥ ८ ॥

**III.5.3** That secret and pleasing ampoule or tablet which the bounties of Nature have hidden in the forest vegetation, may the bounties of Nature grant to us with the intake of it, a long life for our good sustenance.

**III.5.4** The Parṇa capsule (holding the drug) is a blessing, the most efficacious as cure, has come to me granted by the resplendent Lord (Indra), and approved by the venerable Lord(Varuṇa). Full of splendour, I shall accept and take it orally in order to enjoy a long life through a hundred autumns.

**III.5.5** This Parṇa ampoule-drug has ascended to save me from great ill, so that I acquire superiority to the rich people and to the highly learned ones.

**III.5.6** Whosoare skilled chariot makers, and whosoare gifted smiths, O Parṇa tablet , may you gather all of them around me willing to serve.

**III.5.7** Those who are Chieftains, the king-makers, and those who are village-leaders, full of initiative, O Parṇa drug-tablet, may you gather all of them around me willing to serve.

**III.5.8** O capsule containing the Parṇa drug, you are protector of body, brave and kin to me, (you are) also a brave since birth with the brilliance of the year, thereby I accept you as a drug to be taken orally, i.e., to be swallowed, as a physician I prescribe it to patients (i.e. badhnāmi).

( ६ ) षष्ठं सूक्तम्

(१–८) अष्टर्चस्यास्य सूक्तस्य जगद्बीजं पुरुष ऋषिः । अश्वत्थवनस्पतिर्देवता । अनुष्टुप् छन्दः ॥

पुमान्पुंसः परिजातोऽश्वत्थः खदिरादधि ।
स हन्तु शत्रून्मामकान्यानहं द्वेष्मि ये च माम् ॥१॥
तानश्वत्थ निः शृणीहि शत्रून्वैबाधदोधतः ।
इन्द्रेण वृत्रघ्ना मेदी मित्रेण वरुणेन च ॥२॥
यथाश्वत्थ निरभनोन्तर्महत्यर्णवे ।
एवा तान्त्सर्वान्निर्भङ्ग्धि यानहं द्वेष्मि ये च माम् ॥३॥
यः सहमानश्चरसि सासहान इव ऋषभः ।
तेनाश्वत्थ त्वया वयं सपत्नान्त्सहिषीमहि ॥४॥
सिनात्वेनान्निर्ऋतिर्मृत्योः पाशैरमोक्यैः ।
अश्वत्थ शत्रून्मामकान्यानहं द्वेष्मि ये च माम् ॥५॥
यथाश्वत्थ वानस्पत्यानारोहन्कृणुषेधरान् ।
एवा मे शत्रोर्मूर्धानं विष्वग्भिन्द्धि सहस्व च ॥६॥

पुमान् । पुंसः । परिऽजातः । अश्वत्थः । खदिरात् । अधि ।
सः । हन्तु । शत्रून् । मामकान् । यान् । अहम् । द्वेष्मि । ये । च । माम् ॥ १ ॥
तान् । अश्वत्थ । निः । शृणीहि । शत्रून् । वैबाधऽदोधतः ।
इन्द्रेण । वृत्रऽघ्ना । मेदी । मित्रेण । वरुणेन । च ॥ २ ॥
यथा । अश्वत्थ । निःऽअभनः । अन्तः । महति । अर्णवे ।
एव । तान् । सर्वान् । निः । भङ्ग्धि । यान् । अहम् । द्वेष्मि । ये । च । माम् ॥ ३ ॥
यः । सहमानः । चरसि । ससहानःऽइव । ऋषभः ।
तेन । अश्वत्थ । त्वया । वयम् । सऽपत्नान् । सहिषीमहि ॥ ४ ॥
सिनातु । एनान् । निःऽऋतिः । मृत्योः । पाशैः । अमोक्यैः ।
अश्वत्थ । शत्रून् । मामकान् । यान् । अहम् । द्वेष्मि । ये । च । माम् ॥ ५ ॥
यथा । अश्वत्थ । वानस्पत्यान् । आऽरोहन् । कृणुषे । अधरान् ।
एव । मे । शत्रोः । मूर्धानम् । विष्वक् । भिन्द्धि । सहस्व । च ॥ ६ ॥

## Aśvatthah

**III.6.1** Like a manly person born out of a manly father, Aśvattha (Ficus religiosa -holy fig tree) grows upon khadira (Acacia catechu). May it slay my enemies, whom I hate and who hate me.

**III.6.2** With the help of the resplendent Lord (Indra), the destroyer of evil, in alliance with the Lord Friendly (Mitra) and venerable (Varuṇa), O Aśvattha, may you crush completely those enemies , who put up all sorts of obstacles and try to terrorize (us).

**III.6.3** O Aśvattha, as you have torn apart (khadira) in the vast mid-space, so may you tear off completely all of them whom I hate and who hate me.
(Kha = midspace; dira = torn apart).

**III.6.4** As you go subduing like a victorious bull, as such with you, O Aśvattha, may we subdue our rivals.

**III.6.5** O Aśvattha, may the wretchedness with the fetters of death, which may never be loosened, bind them down fast those enemies of mine, whom I hate and who hate me.

**III.6.6** O Aśvattha, as you mount upon other trees and thus put them under you, so may you shatter the head of my enemy to pieces and subdue him.

तेऽधराञ्चः प्र प्लवन्तां छिन्ना नौरिव बन्धनात् ।
न वैबाधप्रणुत्तानां पुनरस्ति निवर्तनम् ॥७॥
प्रैणान्नुदे मनसा प्र चित्तेनोत ब्रह्मणा ।
प्रैणान्वृक्षस्य शाखयाश्वत्थस्य नुदामहे ॥८॥

ते । अधराञ्चः । प्र । प्लवन्ताम् । छिन्ना । नौःऽइव । बन्धनात् ।
न । वैबाधऽप्रनुत्तानाम् । पुनः । अस्ति । निऽवर्तनम् ॥ ७ ॥
प्र । एनान् । नुदे । मनसा । प्र । चित्तेन । उत । ब्रह्मणा ।
प्र । एनान् । वृक्षस्य । शाखया । अश्वत्थस्य । नुदामहे ॥ ८ ॥

( ७ ) सप्तमं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । (१-३) प्रथमादितृचस्य हरिणः, (४) चतुर्थ्या ऋचस्तारके, (५) पञ्चम्या आपः, (६-७) षष्ठीसप्तम्योश्च यक्ष्मनाशनं देवताः । (१-५, ७) प्रथमादिपञ्चानां सप्तम्याश्चानुष्टुप्, (६) षष्ठ्याश्च भुरिगनुष्टुप् छन्दसी ॥

हरिणस्य रघुष्यदोऽधि शीर्षणि भेषजम् ।
स क्षेत्रियं विषाणया विषूचीनमनीनशत् ॥१॥
अनु त्वा हरिणो वृषा पद्भिश्चतुर्भिरक्रमीत् ।
विषाणे वि ष्य गुष्पितं यदस्य क्षेत्रियं हृदि ॥२॥
अदो यदवरोचते चतुष्पक्षमिव च्छदिः ।
तेना ते सर्वं क्षेत्रियमङ्गेभ्यो नाशयामसि ॥३॥
अमू ये दिवि सुभगे विचृतौ नाम तारके ।
वि क्षेत्रियस्य मुञ्चतामधमं पाशमुत्तमम् ॥४॥

हरिणस्य । रघुऽस्यदः । अधि । शीर्षणि । भेषजम् ।
सः । क्षेत्रियम् । विऽसानया । विषूचीनम् । अनीनशत् ॥ १ ॥
अनु । त्वा । हरिणः । वृषा । पत्ऽभिः । चतुःऽभिः । अक्रमीत् ।
विऽसाने । वि । स्य । गुष्पितम् । यत् । अस्य । क्षेत्रियम् । हृदि ॥ २ ॥
अदः । यत् । अवऽरोचते । चतुष्पक्षम्ऽइव । छदिः ।
तेन । ते । सर्वम् । क्षेत्रियम् । अङ्गेभ्यः । नाशयामसि ॥ ३ ॥
अमू इति । ये इति । दिवि । सुभगे इति सुऽभगे । विऽचृतौ । नाम । तारके इति ।
वि । क्षेत्रियस्य । मुञ्चताम् । अधमम् । पाशम् । उत्ऽतमम् ॥ ४ ॥

**III.6.7** May they drift down-wards like a boat cut off from its mooring. There is no come-back for those who have been thrown out by the splitter.

**III.6.8** I drive them farther with my mind, with my thinking, and with my prayer. We hereby drive them farther with a branch of Aśvattha tree.

### Hariṇaḥ

**III.7.1** On the head of the fast running deer, there lies a remedy. With his horn, may he drive away the hereditary disease in different directions. (Horn of a deer contains ammonium salts of medicinal virtue.) (Kṣettriyam = inherited from parents)

**III.7.2** The impassioned bull-gazelle (vṛṣā-hariṇaḥ) has bounded after you with his four feet. O Horn, may you destroy the hereditary disease that is interwoven in the heart of this man.

**III.7.3** What shines there (spread on the floor) like a rectangular bed-cover (chadi) (i.e. dear-skin), with that we drive out of your limbs all the chronic disease.

### Vidyut-Tarak

**III.7.4** There in the sky are the two auspicious stars, vicṛta (lit.releasers) by name. May they loosen the noose of the hereditary disease set in the lower limbs as well as in the upper limbs.(vicṛtau nāma tārake, a cluster of two stars called vicṛta)

आप इद्वा उ भेषजीरापो अमीवचातनीः ।
आपो विश्वस्य भेषजीस्तास्त्वा मुञ्चन्तु क्षेत्रियात् ॥५॥
यदासुतेः क्रियमाणायाः क्षेत्रियं त्वा व्यानशे ।
वेदाहं तस्य भेषजं क्षेत्रियं नाशयामि त्वत् ॥६॥
अपवासे नक्षत्राणामपवास उषसामुत । अपास्मत्सर्वं दुर्भूतमप क्षेत्रियमुच्छतु ॥७॥

आपः । इत् । वै । ऊं इति । भेषजीः । आपः । अमीवऽचातनीः ।
आपः । विश्वस्य । भेषजीः । ताः । त्वा । मुञ्चन्तु । क्षेत्रियात् ॥ ५ ॥
यत् । आऽसुतेः । क्रियमाणायाः । क्षेत्रियम् । त्वा । विऽआनशे ।
वेद । अहम् । तस्य । भेषजम् । क्षेत्रियम् । नाशयामि । त्वत् ॥ ६ ॥
अपऽवासे । नक्षत्राणाम् । अपऽवासे । उषसाम् । उत ।
अप । अस्मत् । सर्वम् । दुःऽभूतम् । अप । क्षेत्रियम् । उच्छतु ॥ ७ ॥

## ( ८ ) अष्टमं सूक्तम्

(१-६) षड्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । (१-४) प्रथमादिचतुर्ऋचां मित्रादयो विश्वे देवाः, (५-६) पञ्चमीषष्ठयोश्च मनो देवताः । (१, ३) प्रथमातृतीययोस्त्रिष्टुप्, (२, ६) द्वितीयाषष्ठयोर्जगती, (४) चतुर्थ्याश्चतुष्पदा विराड्बृहतीगर्भा त्रिष्टुप्, (५) पञ्चम्याश्चानुष्टुप् छन्दांसि ॥

आ यातु मित्र ऋतुभिः कल्पमानः संवेशयन्पृथिवीमुस्रियाभिः ।
अथास्मभ्यं वरुणो वायुरग्निर्बृहद्राष्ट्रं संवेश्यं दधातु ॥१॥
धाता रातिः सवितेदं जुषन्तामिन्द्रस्त्वष्टा प्रति हर्यन्तु मे वचः ।
हुवे देवीमदितिं शूरपुत्रां सजातानां मध्यमेष्ठा यथासानि ॥२॥
हुवे सोमं सवितारं नमोभिर्विश्वानादित्याँ अहमुत्तरत्वे ।
अयमग्निर्दीदायद्दीर्घमेव सजातैरिद्धोऽप्रतिब्रुवद्भिः ॥३॥

आ । यातु । मित्रः । ऋतुऽभिः । कल्पमानः । सम्ऽवेशयन् । पृथिवीम् । उस्रियाभिः ।
अथ । अस्मभ्यम् । वरुणः । वायुः । अग्निः । बृहत् । राष्ट्रम् । सम्ऽवेश्यम् । दधातु ॥१॥
धाता । रातिः । सविता । इदम् । जुषन्ताम् । इन्द्रः । त्वष्टा । प्रति । हर्यन्तु । मे । वचः ।
हुवे । देवीम् । अदितिम् । शूरऽपुत्राम् । सऽजातानाम् । मध्यमेऽस्थाः । यथा । असानि ॥२॥
हुवे । सोमम् । सवितारम् । नमःऽभिः । विश्वान् । आदित्यान् । अहम् । उत्तरऽत्वे ।
अयम् । अग्निः । दीदयत् । दीर्घम् । एव । सऽजातैः । इद्धः । अप्रतिब्रुवत्ऽभिः ॥ ३ ॥

### Āpaḥ

**III.7.5** Waters are verily the remedies, waters are dispeller of diseases. Waters are cure of all, may they make you free from the hereditary disease.(Āpaḥ = waters. always in feminine and in plural)

### Against Yakṣma - Chronic disease

**III.7.6** While preparing decoction, the distilled caustic liquor has caused this injury to you. I know the remedy for that and I hereby drive away your chronic and inveterate disease. (Kṣettriya = hereditary and hence chronic and inveterate or deep-rooted)

**III.7.7** In the fading of asterisms, in the fading out of the dawns also, from us, may you allow to fade out all that of evil nature , fade out (apavas) the kṣetriya.

### Mitra and other Divinities

**III.8.1** May the Sun come enabling us to live long with (changing) seasons and pervading the earth with ruddy rays. Thereafter, may the venerable (Varuṇa) Lord, the omnipresent (Vāyu) Lord and the adorable (Agni) Lord grant us a land large enough to live amicably in. (Rāṣṭra = country; empire, land)

**III.8.2** May the creator (Dhatṛ) Lord, the bounteous (Ratiḥ) Lord,and the inspirer (Savitṛ) Lord hear this call of mine. May the resplendent (Indra) Lord and supreme architect (Tvaṣṭṛ) listen to my words favourable inclined. I pray to the earth divine, the mother of brave sons, that I may occupy the central-most position among my kinsfolk.

**III.8.3** With my homages, I invoke the blissful (soma) Lord, the inspirer (savitṛ) (impeller) and all the suns (the ādityāḥ) (i.e. all the twelve months ) for attaining superiority. May this fire (agni), lighted by my kinsmen without uttering a word of opposition, go on burning bright for long.

इहेदसाथ न परो गमाथेर्यो गोपाः पुष्टपतिर्व आजत् ।
अस्मै कामायोप कामिनीर्विश्वे वो देवा उपसंयन्तु ॥४॥
सं वो मनांसि सं व्रता समाकूतीर्नमामसि ।
अमी ये विव्रता स्थन तान्वः सं नमयामसि ॥५॥
अहं गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत ।
मम वशेषु हृदयानि वः कृणोमि मम यातमनुवर्त्मान एत ॥६॥

इह । इत् । असाथ । न । परः । गमाथ । इर्यः । गोपाः । पुष्टऽपतिः । वः । आ । अजत् ।
अस्मै । कामाय । उप । कामिनीः । विश्वे । वः । देवाः । उपऽसंयन्तु ॥ ४ ॥
सम् । वः । मनांसि । सम् । व्रता । सम् । आऽकूतीः । नमामसि ।
अमी इति । ये । विऽव्रताः । स्थन । तान् । वः । सम् । नमयामसि ॥ ५ ॥
अहम् । गृभ्णामि । मनसा । मनांसि । मम । चित्तम् । अनु । चित्तेभिः । आ । इत ।
मम । वशेषु । हृदयानि । वः । कृणोमि । मम । यातम् । अनुऽवर्त्मानः । आ । इत ॥ ६ ॥

## ( ९ ) नवमं सूक्तम्

(१-६) षड्ऋचस्यास्य सूक्तस्य वामदेव ऋषिः । द्यावापृथिव्यौ विश्वे देवा वा देवताः । (१-३, ५) प्रथमादि-तृचस्य पञ्चम्या ऋचश्चानुष्टुप्, (४) चतुर्थ्याश्चतुष्पदा निचृद्बृहती, (६) षष्ठयाश्च भुरिगनुष्टुप् छन्दांसि ॥

कर्शफस्य विशफस्य द्यौष्पिता पृथिवी माता ।
यथाभिचक्र देवास्तथाप कृणुता पुनः ॥१॥
अश्रेष्माणो अधारयन्तथा तन्मनुना कृतम् ।
कृणोमि वध्रि विष्कन्धं मुष्काबर्हो गवामिव ॥२॥
पिशङ्गे सूत्रे खृगलं तदा बध्नन्ति वेधसः ।
श्रवस्युं शुष्मं काबवं वध्रिं कृण्वन्तु बन्धुरः ॥३॥

कर्शफस्य । विऽशफस्य । द्यौः । पिता । पृथिवी । माता ।
यथा । अभिऽचक्र । देवाः । तथा । अप । कृणुत । पुनः ॥ १ ॥
अश्रेष्माणः । अधारयन् । तथा । तत् । मनुना । कृतम् ।
कृणोमि । वध्रि । विऽस्कन्धम् । मुष्कऽआबर्हः । गवाम्ऽइव ॥ २ ॥
पिशङ्गे । सूत्रे । खृगलम् । तत् । आ । बध्नन्ति । वेधसः ।
श्रवस्युम् । शुष्मम् । काबवम् । वध्रिम् । कृण्वन्तु । बन्धुरः ॥ ३ ॥

**III.8.4** O cows, may you stay just here. Please do not go away. May the quick-running cowherd, the nourisher Lord, urge you (to this place ). May all the enlightened ones approach you, the desirable , for satisfaction of desires of this sacrificer.(Kāminīḥ = Cows; gopa = cowherd; puṣṭapatih = nourisher Lord)

## Mind or Manas

**III.8.5** To unity we bend your minds, your actions (vrata), and your resolves. You, who, at present, are of discordant actions, we hereby bend to complete unity.

**III.8.6** With my mind, I take hold of your minds. Follow my thought with your thinking. I take your hearts under my control. Tread the path on which I lead you.

## Dyāvā-Pṛthivi Pair - All-Bounties.

**III.9.1** Of the emaciating (karśapha) and of the penetrating (viśapha-hoofless or with distorted hoofs), (gout), heaven is the father and earth the mother. O bounties of Nature, as you have brought it, so may you remove it also.

**III.9.2** Those free from phlegm have kept it (the gout) under control. So it is done by a well-thinking man (Manu). I hereby make the gout impotent, as a castrater emasculates bulls.

**III.9.3** Then the wise ones bind a stick with a reddish coloured string (to the affected part). May that bandage make the strong and dehydrating snake-bite (Kābavam) impotent or non-effective.

येना श्रवस्यवश्चरथ देवा इवासुरमायया ।
शुनां कपिरिव दूषणो बन्धुरा काबवस्य च ॥४॥
दुष्ट्यै हि त्वा भत्स्यामि दूषयिष्यामि काबवम् ।
उदाशवो रथा इव शपथेभिः सरिष्यथ ॥५॥
एकशतं विष्कन्धानि विष्ठिता पृथिवीमनु ।
तेषां त्वामग्र उज्जहरुर्मणिं विष्कन्धदूषणम् ॥६॥

येन । श्रवस्यवः । चरथ । देवाःऽइव । असुरऽमायया ।
शुनाम् । कपिःऽइव । दूषणः । बन्धुरा । काबवस्य । च ॥ ४ ॥
दुष्ट्यै । हि । त्वा । भत्स्यामि । दूषयिष्यामि । काबवम् ।
उत् । आशवः । रथाःऽइव । शपथेभिः । सरिष्यथ ॥ ५ ॥
एकऽशतम् । विऽस्कन्धानि । विऽस्थिता । पृथिवीम् । अनु ।
तेषाम् । त्वाम् । अग्रे । उत् । जहरुः । मणिम् । विस्कन्धऽदूषणम् ॥ ६ ॥

## ( १० ) दशमं सूक्तम्

(१-१३) त्रयोदशर्चस्यास्य सूक्तस्याथर्वा ऋषिः । अष्टका देवता । (१-३, ८-११, १३) प्रथमादितृचस्याष्टम्यादिचतसृणामृचां त्रयोदश्याश्चानुष्टुप् , (४-६, १२) चतुर्थ्यादितृचस्य द्वादश्याश्च त्रिष्टुप् , (७) सप्तम्याश्च त्र्यवसाना षट्पदा विराड्गर्भातिजगती छन्दांसि ॥

प्रथमा ह व्युवास सा धेनुरभवद्यमे ।
सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥१॥
यां देवाः प्रतिनन्दन्ति रात्रिं धेनुमुपायतीम् ।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥२॥
संवत्सरस्य प्रतिमां यां त्वा रात्र्युपास्महे ।
सा न आयुष्मतीं प्रजां रायस्पोषेण सं सृज ॥३॥

प्रथमा । ह । वि । उवास । सा । धेनुः । अभवत् । यमे ।
सा । नः । पयस्वती । दुहाम् । उत्तराम्ऽउत्तराम् । समाम् ॥ १ ॥
याम् । देवाः । प्रतिऽनन्दन्ति । रात्रिम् । धेनुम् । उपऽआयतीम् ।
सम्ऽवत्सरस्य । या । पत्नी । सा । नः । अस्तु । सुऽमङ्गली ॥ २ ॥
सम्ऽवत्सरस्य । प्रतिऽमाम् । याम् । त्वा । रात्रि । उपऽआस्महे ।
सा । नः । आयुष्मतीम् । प्रऽजाम् । रायः । पोषेण । सम् । सृज ॥ ३ ॥

**III.9.4** You, who are active in your strength , like gods fighting incessantly with evils, evil forces(the demons). Even as monkey scorns dogs, O bandage, bandhuraḥ, scorn the kābava. (Ḳabava = cloth-bandages round the wound or ailing limb of the patient.)

**III.9.5** Surely I shall bind you for (removing) the ill-effect. Thus I shall remove the ill-effect of the snake-bite. Then you will be able to move about like chariots drawn by vigorous horses with scoldings (of the charioteer).

**III.9.6** A hundred and one are hindrances spread all over the earth. With them they have confronted you,the drug-tablet,remover of all hindrances.

## Ekāṣtakā

**III.10.1** She was the first dawn (Ekāṣṭaka) to shine ( in the firmament). In this world (Yama), she became a milch cow. May she, rich in milk, go on feeding us year after year.(Prathamā = the first dawn in the present creation)

**III.10.2** Whom the enlightened ones welcome with joy, the (Ekāṣṭakā) night as she approaches as a cow, who is the consort of the year ; may she be propitious to us.

**III.10.3** O (Ekāṣṭakā) night, whom we worship as the measure of the cycle of the year, as such may you unite our long-living progeny with riches and nourishment.

इयमेव सा या प्रथमा व्यौच्छदास्वितरासु चरति प्रविष्टा ।
महान्तो अस्यां महिमानो अन्तर्वधूर्जिगाय नवगज्जनित्री ॥४॥
वानस्पत्या ग्रावाणो घोषमक्रत हविष्कृण्वन्तः परिवत्सरीणम् ।
एकाष्टके सुप्रजसः सुवीरा वयं स्याम पतयो रयीणाम् ॥५॥
इडायास्पदं घृतवत्सरीसृपं जातवेदः प्रति हव्या गृभाय ।
ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि रन्तिरस्तु ॥६॥
आ मा पुष्टे च पोषे च रात्रि देवानां सुमतौ स्याम ।
पूर्णा दर्वे परा पत सुपूर्णा पुनरा पत ।
सर्वान्यज्ञान्त्संभुञ्जतीषमूर्जं न आ भर ॥७॥
आयमगन्त्संवत्सरः पतिरेकाष्टके तव ।
सा न आयुष्मतीं प्रजां रायस्पोषेण सं सृज ॥८॥
ऋतून्यज ऋतुपतीनार्तवानुत हायनान् ।
समाः संवत्सरान्मासान्भूतस्य पतये यजे ॥९॥
ऋतुभ्यष्ट्वार्तवेभ्यो माद्भ्यः संवत्सरेभ्यः ।
धात्रे विधात्रे समृधे भूतस्य पतये यजे ॥१०॥

इयम् । एव । सा । या । प्रथमा । विऽऔच्छत् । आसु । इतरासु । चरति । प्रऽविष्टा ।
महान्तः । अस्याम् । महिमानः । अन्तः । वधूः । जिगाय । नवऽगत् । जनित्री ॥ ४ ॥
वानस्पत्याः । ग्रावाणः । घोषम् । अक्रत । हविः । कृण्वन्तः । परिवत्सरीणम् ।
एकऽअष्टके । सुऽप्रजसः । सुऽवीराः । वयम् । स्याम । पतयः । रयीणाम् ॥ ५ ॥
इडायाः । पदम् । घृतऽवत् । सरीसृपम् । जातऽवेदः । प्रति । हव्या । गृभाय ।
ये । ग्राम्याः । पशवः । विश्वऽरूपाः । तेषाम् । सप्तानाम् । मयि । रन्तिः । अस्तु ॥ ६ ॥
आ । मा । पुष्टे । च । पोषे । च । रात्रि । देवानाम् । सुऽमतौ । स्याम । पूर्णा । दर्वे । परा । पत ।
सुऽपूर्णा । पुनः । आ । पत । सर्वान् । यज्ञान् । सम्ऽभुञ्जती । इषम् । ऊर्जम् । नः । आ । भर ॥
आ । अयम् । अगन् । सम्ऽवत्सरः । पतिः । एकऽअष्टके । तव ।
सा । नः । आयुष्मतीम् । प्रऽजाम् । रायः । पोषेण । सम् । सृज ॥ ८ ॥
ऋतून् । यजे । ऋतुऽपतीन् । आर्तवान् । उत । हायनान् ।
समाः । सम्ऽवत्सरान् । मासान् । भूतस्य । पतये । यजे ॥ ९ ॥
ऋतुऽभ्यः । त्वा । आर्तवेभ्यः । मात्ऽभ्यः । सम्ऽवत्सरेभ्यः ।
धात्रे । विऽधात्रे । सम्ऽऋधे । भूतस्य । पतये । यजे ॥

**III.10.4** This is verily she, who in the very beginning dispelled the darkness. She moves about having entered in these other (dawns). Great glories are within her. She is a newly wed bride about to bear a child.

**III.10.5** Wooden grinders have started making noise while preparing the oblation meant for the completion of the year. O Ekāṣṭaka, may we, having good progeny and good soldiers, become masters of riches.

**III.10.6** The shrine of Iḍā (iḍāyāspadam) flows with ghṛta and butter. O Jataveda (knower of all that is born, an epithet of Agni), please accept our oblations. Cattle and our other animals, of seven kinds and of numerous forms, abide with me fully contented.(Seven animals are = Cow, Horse , Goat, Sheep, Men, Donkey, and Camel).

**III.10.7** O (Ekāṣtakā) night, may you set me in prosperity and nourishment. May we be in good books of the enlightened ones. A spoon, go thither full of oblations and come back filled up to brim. Consuming all the oblations at the sacrifice, may you bring food and vigour to us.

**III.10.8** O Ekāṣṭakā (eighth night of the moonless fort-night of Maghā month), here has come the year, your husband. As such, may you unite for our long-living progeny with riches and nourishment.

**III.10.9** I offer oblations to seasons, to lords of seasons, to couples of seasons, to winters, to summers, to years and to months. I offer oblations to the Lord of all existence.

**III.10.10** O Ekāstakā,I adore you for the sake of seasons, for couple of seasons, for months, for the year, for the creator, for the sustainer and for the bounteous Lord of existence.

इडया जुह्वतो वयं देवान्घृतवता यजे ।
गृहानलुभ्यतो वयं सं विशेमोप गोमतः ॥११॥
एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् ।
तेन देवा व्यसहन्त शत्रून्हन्ता दस्यूनामभवच्छचीपतिः ॥१२॥
इन्द्रपुत्रे सोमपुत्रे दुहितासि प्रजापतेः ।
कामानस्माकं पूरय प्रति गृह्णाहि नो हविः ॥१३॥

इडया । जुह्वतः । वयम् । देवान् । घृतऽवता । यजे ।
गृहान् । अलुभ्यतः । वयम् । सम् । विशेम । उप । गोऽमतः ॥ ११ ॥
एकऽअष्टका । तपसा । तप्यमाना । जजान । गर्भम् । महिमानम् । इन्द्रम् ।
तेन । देवाः । वि । असहन्त । शत्रून् । हन्ता । दस्यूनाम् । अभवत् । शचीऽपतिः ॥१२॥
इन्द्रऽपुत्रे । सोमऽपुत्रे । दुहिता । असि । प्रजाऽपतेः ।
कामान् । अस्माकम् । पूरय । प्रति । गृह्णाहि । नः । हविः ॥ १३ ॥

( ११ ) एकादशं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्य ब्रह्मा, भृग्वङ्गिराश्चोभौ वा ऋषी । इन्द्राग्नी आयुः यक्ष्मनाशनश्च देवताः । (१-३) प्रथमादितृचस्य त्रिष्टुप्, (४) चतुर्थ्याः शक्वरीगर्भा जगती, (५-६) पञ्चमी-षष्ठयोरनुष्टुप्, (७) सप्तम्या उष्णिग्बृहतीगर्भा पथ्यापङ्क्तिः, (८) अष्टम्याश्च त्र्यवसाना षट्पदा बृहतीगर्भा जगती छन्दांसि ॥

मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् ।
ग्राहिर्जग्राह यद्येतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् ॥१॥
यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव ।
तमा हरामि निर्ऋतेरुपस्थादस्पार्शमेनं शतशारदाय ॥२॥
सहस्राक्षेण शतवीर्येण शतायुषा हविषाहार्षमेनम् ।
इन्द्रो यथैनं शरदो नयात्यति विश्वस्य दुरितस्य पारम् ॥३॥

मुञ्चामि । त्वा । हविषा । जीवनाय । कम् । अज्ञातऽयक्ष्मात् । उत । राजऽयक्ष्मात् ।
ग्राहिः । जग्राह । यदि । एतत् । एनम् । तस्याः । इन्द्राग्नी इति । प्र । मुमुक्तम् । एनम् ॥१॥
यदि । क्षितऽआयुः । यदि । वा । पराऽइतः । यदि । मृत्योः । अन्तिकम् । निऽइतः । एव ।
तम् । आ । हरामि । निःऽऋतेः । उपस्थात् । अस्पार्शम् । एनम् । शतऽशारदाय ॥२॥
सहस्रऽअक्षेण । शतऽवीर्येण । शतऽआयुषा । हविषा । आ । अहार्षम् । एनम् ।
इन्द्रः । यथा । एनम् । शरदः । नयाति । अति । विश्वस्य । दुःऽइतस्य । पारम् ॥ ३ ॥

**III.10.11** We entertain the enlightened ones with words of praise and with preparations made of clarified butter. Free from greed, may we enter houses rich with cows.

**III.10.12** Ekāṣṭakā practising austerity, has given birth to her embryo, the majestic Sun. With him the enlightened ones have overpowered their enemies and the master of action has become the slayer of robbers.

**III.10.13** O Ekāstakā, whose son is the Sun, and whose son is the Moon, you are the daughter of the Lord of all creatures. May you fulfil our desires and accept our offerings.

## Indrāgnī (Paīr)-Ayu and against Yakṣma

**III.11.1** I release you from the unknown wasting disease as well as from tuberculosis by use of proper diet (haviṣā) for a long life. If the grip has siezed him, may you, O Lord resplendent and adorable (indrāgnī) set him free from it. (cf.Ṛv. X.161.1)

**III.11.2** Even if his days of life have come to an end, even if he is to depart from this world, and even if he has been carried very close to death, I hereby bring him back from the very lap of perdition, I have strengthened him to live through a hundred autumns. (cf.Ṛv. X.161.2)

**III.11.3** I have brought him back with the use of proper diet giving a thousand times power of sense organs, hundred times of strength and a long life of a hundred years, so that may the resplendent Lord lead him through the (hundred) autumns across all the troubles.(cf.Ṛv. X.161.3 with variation)

शतं जीव शरदो वर्धमानः शतं हेमन्तान्छतमु वसन्तान् ।
शतं त इन्द्रो अग्निः सविता बृहस्पतिः शतायुषा हविषाहार्षमेनम् ॥४॥
प्र विशतं प्राणापानावनड्वाहाविव व्रजम् ।
व्य१न्ये यन्तु मृत्यवो यानाहुरितरान्छतम् ॥५॥
इहैव स्तं प्राणापानौ माप गातमितो युवम् ।
शरीरमस्याङ्गानि जरसे वहतं पुनः ॥६॥
जरायै त्वा परि ददामि जरायै नि धुवामि त्वा ।
जरा त्वा भद्रा नेष्ट व्य१न्ये यन्तु मृत्यवो यानाहुरितरान्छतम् ॥७॥
अभि त्वा जरिमाहित गामुक्षणमिव रज्ज्वा ।
यस्त्वा मृत्युरभ्यधत्त जायमानं सुपाशया ।
तं ते सत्यस्य हस्ताभ्यामुदमुञ्चद्बृहस्पतिः ॥८॥

शतम् । जीव । शरदः । वर्धमानः । शतम् । हेमन्तान् । शतम् । ऊं इति । वसन्तान् । शतम् ।
ते । इन्द्रः । अग्निः । सविता । बृहस्पतिः । शतऽआयुषा । हविषा । आ । अहार्षम् । एनम् ॥
प्र । विशतम् । प्राणापानौ । अनड्वाहौऽइव । व्रजम् ।
वि । अन्ये । यन्तु । मृत्यवः । यान् । आहुः । इतरान् । शतम् ॥
इह । एव । स्तम् । प्राणापानौ । मा । अप । गातम् । इतः । युवम् ।
शरीरम् । अस्य । अङ्गानि । जरसे । वहतम् । पुनः ॥ ६ ॥
जरायै । त्वा । परि । ददामि । जरायै । नि । धुवामि । त्वा । जरा । त्वा । भद्रा । नेष्ट ।
वि । अन्ये । यन्तु । मृत्यवः । यान् । आहुः । इतरान् । शतम् ॥ ७ ॥
अभि । त्वा । जरिमा । अहित । गाम् । उक्षणम्ऽइव । रज्ज्वा ।
यः । त्वा । मृत्युः । अभिऽअधत्त । जायमानम् । सुऽपाशया ।
तम् । ते । सत्यस्य । हस्ताभ्याम् । उत् । अमुञ्चत् । बृहस्पतिः ॥ ८ ॥

**III.11.4** Growing always strong, may live through a hundred autumns, through a hundred winters and through a hundred springs also. May the resplendent Lord, the adorable Lord, the inspirer Lord and the Lord supreme provide you with a hundred years. I have brought him back by a dietary for hundred years. (cf.Rv. X.16.4-with variation) (Indra,Agni, Savitr and Bṛhaspati have been invoked one Lord with numerous names)

**III.11.5** May you, in-breath and out-breath, go on entering in him as two bullocks in a cow-pen. May other deaths, of which there are hundreds yet to come they say, "keep away".

**III.11.6** O in-breath and out-breath, may both of you stay here. May you not depart from here. Again may you carry his body and members up to his ripe old age (jarase) again.

**III.11.7** I hereby entrust you to ripe old age (jarāyai). I urge you to reach old age. May the old age lead you benignly. May the other deaths go away, which they call the remaining hundred.

**III.11.8** May the ripe old age take hold of you as a steer is tied with a rope. From the death, which had caught you in its fine noose as soon as you were born, the Lord supreme has released you with the hands of your truth.(satyasya).

### ( १२ ) द्वादशं सूक्तम्

(१–९) नवर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः। शाला वास्तोष्पतिश्च देवते। (१, ४–५) प्रथमाचतुर्थीपञ्चमीनामृचां त्रिष्टुप्, (२) द्वितीयाया विराड्जगती, (३) तृतीयाया बृहती, (६) षष्ठ्याः शक्वरीगर्भा जगती, (७) सप्तम्या आर्ष्यनुष्टुप्, (८) अष्टम्या भुरिक्त्रिष्टुप्, (९) नवम्याश्चानुष्टुप् छन्दांसि ॥

इहैव ध्रुवां नि मिनोमि शालां क्षेमे तिष्ठाति घृतमुक्षमाणा।
तां त्वा शाले सर्ववीराः सुवीरा अरिष्टवीरा उप सं चरेम ॥१॥
इहैव ध्रुवा प्रति तिष्ठ शालेऽश्वावती गोमती सूनृतावती।
ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय ॥२॥
धरुण्यसि शाले बृहच्छन्दाः पूतिधान्या।
आ त्वा वत्सो गमेदा कुमार आ धेनवः सायमास्पन्दमानाः ॥३॥
इमां शालां सविता वायुरिन्द्रो बृहस्पतिर्नि मिनोतु प्रजानन्।
उक्षन्तूद्ना मरुतो घृतेन भगो नो राजा नि कृषिं तनोतु ॥४॥
मानस्य पत्नि शरणा स्योना देवी देवेभिर्निमितास्यग्रे।
तृणं वसाना सुमना असस्त्वमथास्मभ्यं सहवीरं रयिं दाः ॥५॥
ऋतेन स्थूणामधि रोह वंशोग्रो विराजन्नप वृङ्क्ष्व शत्रून्।
मा ते रिषन्नुपसत्तारो गृहाणां शाले शतं जीवेम शरदः सर्ववीराः ॥६॥

इह। एव। ध्रुवाम्। नि। मिनोमि। शालाम्। क्षेमे। तिष्ठाति। घृतम्। उक्षमाणा।
ताम्। त्वा। शाले। सर्वऽवीराः। सुऽवीराः। अरिष्टऽवीराः। उप। सम्। चरेम ॥ १ ॥
इह। एव। ध्रुवा। प्रति। तिष्ठ। शाले। अश्वऽवती। गोऽमती। सूनृताऽवती।
ऊर्जस्वती। घृतऽवती। पयस्वती। उत्। श्रयस्व। महते। सौभगाय ॥ २ ॥
धरुणी। असि। शाले। बृहत्ऽछन्दाः। पूतिऽधान्या।
आ। त्वा। वत्सः। गमेत्। आ। कुमारः। आ। धेनवः। सायम्। आऽस्पन्दमानाः ॥ ३ ॥
इमाम्। शालाम्। सविता। वायुः। इन्द्रः। बृहस्पतिः। नि। मिनोतु। प्रऽजानन्।
उक्षन्तु। उद्ना। मरुतः। घृतेन। भगः। नः। राजा। नि। कृषिम्। तनोतु ॥ ४ ॥
मानस्य। पत्नि। शरणा। स्योना। देवी। देवेभिः। निऽमिता। असि। अग्रे।
तृणम्। वसाना। सुऽमनाः। असः। त्वम्। अथ। अस्मभ्यम्। सहऽवीरम्। रयिम्। दाः ॥५॥
ऋतेन। स्थूणाम्। अधि। रोह। वंश। उग्रः। विऽराजन्। अप। वृङ्क्ष्व। शत्रून्।
मा। ते। रिषन्। उपऽसत्तारः। गृहाणाम्। शाले। शतम्। जीवेम। शरदः। सर्वऽवीराः ॥

**House-śātā-Vāstoṣpatiḥ**

**III.12.1** At this very place, I construct my permanent house. May this residence stand safe and secure overflowing with clarified butter. O house, may we dwell here with all our sons, with excellent sons and with sons never harmed (ever unharmed) (Virāḥ=sons; also brave persons.)

**III.12.2** O house, may you stand at this very place permanently, rich with horses (aśvāvatī), with cows,(gomatī) and with truthful as well as pleasing speech (sūnṛtāvatī). May you flourish full of vigour, full of clarified butter, full of milk for our great good fortune (prosperity).

**III.12.3** O house, supported on pillars you are, having a big roof. You are full of cleaned food grains. May calves, and steers come to you and in the evening may the cows come streaming (with good milk).

**III.12.4** May the impeller Lord, the omnipresent Lord, the resplendent Lord, the Lord supreme, knowing well bless us in the construction of this house. May the cloud-bearing winds sprinkle it with water and clarified butter. May the sovereign Lord of all round prosperity make our cultivation flourish.

**III.12.5** O mistress of measures and construction (mānasya patni), from the very beginning you have been built by the enlightend ones as a good shelter, comfortable and shining. Covered with grass(thatch), may you be benign to us and may bring to us riches along with brave sons.(Patni = O lovely dwelling).

**III.12.6** O flag-pole, mount upon the central pillar with righteousness. Formidable and glorious, keep our enemies away. O house, may those, who live in you, never be harmed. May we live through a hundred autumns with all our sons (and grand sons).

एमां कुमारस्तरुण आ वत्सो जगता सह ।
एमां परिस्रुतः कुम्भ आ दध्नः कलशैरगुः ॥७॥
पूर्णं नारि प्र भर कुम्भमेतं घृतस्य धारामुमृतेन संभृताम् ।
इमां पातृनमृतेना समङ्ग्धीष्टापूर्तमभि रक्षात्येनाम् ॥८॥
इमा आपः प्र भराम्ययक्ष्मा यक्ष्मनाशनीः ।
गृहानुप प्र सीदाम्यमृतेन सहाग्निना ॥९॥

आ । इमाम् । कुमारः । तरुणः । आ । वत्सः । जगता । सह ।
आ । इमाम् । परिऽस्रुतः । कुम्भः । आ । दध्नः । कलशैः । अगुः ॥ ७ ॥
पूर्णम् । नारि । प्र । भर । कुम्भम् । एतम् । घृतस्य । धाराम् । अमृतेन । सम्ऽभृताम् ।
इमाम् । पातृन् । अमृतेन । सम् । अङ्ग्धि । इष्टापूर्तम् । अभि । रक्षाति । एनाम् ॥ ८ ॥
इमाः । आपः । प्र । भरामि । अयक्ष्माः । यक्ष्मऽनाशनीः ।
गृहान् । उप । प्र । सीदामि । अमृतेन । सह । अग्निना ॥ ९ ॥

## ( १३ ) त्रयोदशं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । वरुणः सिन्ध्वापो वा देवताः । (१) प्रथमर्चो निचृदनुष्टुप्, (२-४, ७) द्वितीयादित्र्यृचस्य सप्तम्याश्चानुष्टुप्, (५) पञ्चम्या विराड्जगती, (६) षष्ठयाश्च निचृत्त्रिष्टुप् छन्दांसि ॥

यददः संप्रयतीरहावनदता हते ।
तस्मादा नद्यो३ नाम स्थ ता वो नामानि सिन्धवः ॥१॥
यत्प्रेषिता वरुणेनाच्छीभं समवल्गत ।
तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु ष्ठन ॥२॥
अपकामं स्यन्दमाना अवीवरत वो हि कम् ।
इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्नाम वो हितम् ॥३॥

यत् । अदः । सम्ऽप्रयतीः । अहौ । अनदत । हते ।
तस्मात् । आ । नद्यः । नाम । स्थ । ताः । वः । नामानि । सिन्धवः ॥ १ ॥
यत् । प्रऽइषिताः । वरुणेन । आत् । शीभम् । सम्ऽअवल्गत ।
तत् । आप्नोत् । इन्द्रः । वः । यतीः । तस्मात् । आपः । अनु । स्थन ॥ २ ॥
अपऽकामम् । स्यन्दमानाः । अवीवरत । वः । हि । कम् ।
इन्द्रः । वः । शक्तिऽभिः । देवीः । तस्मात् । वाः । नाम । वः । हितम् ॥ ३ ॥

**III.12.7** May a grown up youth, a lad, and a baby son come to this house along with moving cattle. May the jars of pressed out juice along with the pitchers of curd be stored here.

**III.12.8** O woman, to this house of ours bring the full jar pouring out a stream of clarified butter (as if) imbued with immortality. Serve the drinkers with a draught of this ambrosia. May the supplies of all the desired things keep this house fully equipped in every respect.

**III.12.9** I bring here these waters, free from wasteful disease (consumption) and destroyers of the wasteful disease. I enter these houses with the never-dying fire (the ever-glowing one).(ayaksmā = free from disease; yaksmā-nāśanīh= destroyer of disease).

### Rivers - Varuṇaḥ

**III.13.1** Term "nāḍī" - Since you roar while this charged cloud (ahi) is burst, clearly for that reason your name is nadī or nadyaḥ (one that roars). O sindhus, (flowing ones, the rivers) your other names also are similar(i.e.conveying their meaning).

**III.13.2** Term "āpaḥ" - As you, urged by the venerable Lord (varuna), surround all swiftly, as if dancing in a group, and the resplendent one enters you when you are going away, so you get your name āpah (those that enter, or are entered into). (āpnot leads to the name āpah. śībham = ksīpra nāma; swift)

**III.13.3** Term "vāri" - For happiness, the resplendent Lord restrains you, the divine ones, who use to flow (loiter) with your forces against his desire. Therefore, your name comes to be the vār (the restrained ones; the chosen ones).

एको वो देवोप्यतिष्ठत्स्यन्दमाना यथावशम् ।
उदानिषुर्महीरिति तस्मादुदकमुच्यते ॥४॥
आपो भद्रा घृतमिदाप आसन्नग्नीषोमौ बिभ्रत्याप इत्ताः ।
तीव्रो रसो मधुपृचामरंगम आ मा प्राणेन सह वर्चसा गमेत् ॥५॥
आदित्पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ्मासाम् ।
मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः ॥६॥
इदं व आपो हृदयमयं वत्स ऋतावरीः ।
इहेत्थमेत शक्वरीर्यत्रेदं वेशयामि वः ॥७॥

एकः । वः । देवः । अपि । अतिष्ठत् । स्यन्दमानाः । यथाऽवशम् ।
उत् । आनिषुः । महीः । इति । तस्मात् । उदकम् । उच्यते ॥ ४ ॥
आपः । भद्राः । घृतम् । इत् । आपः । आसन् । अग्नीषोमौ । बिभ्रति । आपः । इत् । ताः ।
तीव्रः । रसः । मधुऽपृचाम् । अरम्ऽगमः । आ । मा । प्राणेन । सह । वर्चसा । गमेत् ॥५॥
आत् । इत् । पश्यामि । उत । वा । शृणोमि । आ । मा । घोषः । गच्छति । वाक् । मा । आसाम् ।
मन्ये । भेजानः । अमृतस्य । तर्हि । हिरण्यऽवर्णाः । अतृपम् । यदा । वः ॥ ६ ॥
इदम् । वः । आपः । हृदयम् । अयम् । वत्सः । ऋतऽवरीः ।
इह । इत्थम् । आ । इत । शक्वरीः । यत्र । इदम् । वेशयामि । वः ॥ ७ ॥

( १४ ) चतुर्दशं सूक्तम्

(१-६) षड्डचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । गोष्ठो मन्त्रोक्ता वा देवताः । (१-५) प्रथमादिपञ्चर्चामनुष्टुप्, (६) षष्ठ्याश्चार्षी त्रिष्टुप् छन्दसी ॥

सं वो गोष्ठेन सुषदा सं रय्या सं सुभूत्या ।
अहर्जातस्य यन्नाम तेना वः सं सृजामसि ॥१॥
सं वः सृजत्वर्यमा सं पूषा सं बृहस्पतिः ।
समिन्द्रो यो धनंजयो मयि पुष्यत यद्वसु ॥२॥

सम् । वः । गोऽस्थेन । सुऽसदा । सम् । रय्या । सम् । सुऽभूत्या ।
अहःऽजातस्य । यत् । नाम । तेन । वः । सम् । सृजामसि ॥ १ ॥
सम् । वः । सृजतु । अर्यमा । सम् । पूषा । सम् । बृहस्पतिः ।
सम् । इन्द्रः । यः । धनम्ऽजयः । मयि । पुष्यत । यत् । वसु ॥ २ ॥

**III.13.4** Term "udaka" - The Lord alone superintend you (O udaka) who flow according to your will. Due to this, they the mighty ones, heave up having acquired greatness (They breathed upward fast). So they are called udaka (that goes upwards).

**III.13.5** Term "ghṛtā" - The waters are excellent. The waters are verily the purified butter, and those waters sustain the fire and the herbal sap. May the potent essence of honey-sweet waters, never diminishing in effect, unite (conjoin) me with vital breath as well as wịth lustre.

**III.13.6** I see them here and there, and I hear them. Their sound comes to me, as if it is their speech. O bright coloured waters, when I take you to my full satisfaction, I feel, as if I have tasted the nectar.

**III.13.7** O waters, this is your heart. O supporters of eternal truth, this sacrifice is your dear child. O mighty bestowers, may you come here, this way, where now I place you.

## Cow-stall - Goṣṭhaḥ-Aryaman

**III.14.1** O cows, we provide you with a cow-stall pleasing to live in, with nourishing food, and with comforts, we confer names on you when you are one day old.

**III.14.2** May the ordainer Lord make you procreate, may the nourisher Lord, may the Lord supreme,and may the resplendent one , winner of wealth, make you procreate. May you, O cows, nourish me with your richness of milk.

संजग्माना अबिभ्युषीरस्मिन्गोष्ठे करीषिणीः ।
बिभ्रतीः सोम्यं मध्वनमीवा उपेतन ॥३॥
इहैव गाव एतनेहो शकेव पुष्यत ।
इहैवोत प्र जायध्वं मयि संज्ञानमस्तु वः ॥४॥
शिवो वो गोष्ठो भवतु शारिशाकेव पुष्यत ।
इहैवोत प्र जायध्वं मया वः सं सृजामसि ॥५॥
मया गावो गोपतिना सचध्वमयं वो गोष्ठ इह पोषयिष्णुः ।
रायस्पोषेण बहुला भवन्तीर्जीवा जीवन्तीरुप वः सदेम ॥६॥

सम्ऽजग्मानाः । अबिभ्युषीः । अस्मिन् । गोऽस्थे । करीषिणीः ।
बिभ्रतीः । सोम्यम् । मधु । अनमीवाः । उपऽएतन ॥ ३ ॥
इह । एव । गावः । आ । इतन । इहो इति । शकाऽइव । पुष्यत ।
इह । एव । उत । प्र । जायध्वम् । मयि । सम्ऽज्ञानम् । अस्तु । वः ॥ ४ ॥
शिवः । वः । गोऽस्थः । भवतु । शारिशाकाऽइव । पुष्यत ।
इह । एव । उत । प्र । जायध्वम् । मया । वः । सम् । सृजामसि ॥ ५ ॥
मया । गावः । गोऽपतिना । सचध्वम् । अयम् । वः । गोऽस्थः । इह । पोषयिष्णुः ।
रायः । पोषेण । बहुलाः । भवन्तीः । जीवाः । जीवन्तीः । उप । वः । सदेम ॥ ६ ॥

## ( १५ ) पञ्चदशं सूक्तम्

(१-८) महर्षिस्यास्य सूक्तस्याथर्वा ऋषिः । विश्वे देवा इन्द्राग्नी वा देवते । (१) प्रथमर्चो भुरिक्त्रिष्टुप्, (२-३, ६) द्वितीयातृतीययोः षष्ठ्याश्च त्रिष्टुप्, (४) चतुर्थ्यास्त्र्यवसाना षट्पदा बृहतीगर्भा विराडत्यष्टिः, (५) पञ्चम्या विराड्जगती, (७) सप्तम्या अनुष्टुप्, (८) अष्टम्याश्च निचृत्त्रिष्टुप् छन्दांसि ॥

इन्द्रमहं वणिजं चोदयामि स न ऐतु पुरएता नो अस्तु ।
नुदन्नरातिं परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम् ॥१॥
ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी संचरन्ति ।
ते मा जुषन्तां पयसा घृतेन यथा क्रीत्वा धनमाहराणि ॥२॥

इन्द्रम् । अहम् । वणिजम् । चोदयामि । सः । नः । आ । एतु । पुरःऽएता । नः । अस्तु ।
नुदन् । अरातिम् । परिऽपन्थिनम् । मृगम् । सः । ईशानः । धनऽदाः । अस्तु । मह्यम् ॥ १ ॥
ये । पन्थानः । बहवः । देवऽयानाः । अन्तरा । द्यावापृथिवी इति । सम्ऽचरन्ति ।
ते । मा । जुषन्ताम् । पयसा । घृतेन । यथा । क्रीत्वा । धनम् । आऽहराणि ॥ २ ॥

**III.14.3** O cows of plentiful droppings, may you come to this cow-stall moving together, fearless, free from disease, bearing sweet and pleasing milk.

**III.14.4** O cows, come only to this place. Let you grow up here like flies. May you procreate and multiply here. May there be complete understanding between you and me.

**III.14.5** May this cow-stall be auspicious for you. Let you flourish like cultivated rice. May you procreate and multiply here. We provide you with happiness. (śāriśākā = an animal unidentified (Sāyaṇa);, since śāli means rice also it may be cultivated rice - Griffith)

**III.14.6** O cows, may you be attached to me, your master. This is your cow-stall. Here I am your nourisher. May we attend on you multiplying in richness and nourishment and living long.

## Indra

**III.15.1** I urge the resplendent one (Indra), the trader. May he come to us and be our leader. Slaying the defaulter (who does not pay our dues), the highway man and the wild beast, may he become the master as well as bestower of riches for me.(Paripanthinam- highway man; the thief or robber)

## Pathways - Panthānaḥ

**III.15.2** May those many pathways, which extend in the midst of heaven and earth and along which the enlightened ones travel, delight me with milk and butter, may I make rich profits by sale and purchase.

इध्मेनाग्न इच्छमानो घृतेन जुहोमि हव्यं तरसे बलाय ।
यावदीशे ब्रह्मणा वन्दमान इमां धियं शतसेयाय देवीम् ॥३॥
इमामग्ने शरणिं मीमृषो नो यमध्वानमगाम दूरम् ।
शुनं नो अस्तु प्रपणो विक्रयश्च प्रतिपणः फलिनं मा कृणोतु ।
इदं हव्यं संविदानौ जुषेथां शुनं नो अस्तु चरितमुत्थितं च ॥४॥
येन धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः ।
तन्मे भूयो भवतु मा कनीयोऽग्ने सातघ्नो देवान्हविषा नि षेध ॥५॥
येन धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः ।
तस्मिन्म इन्द्रो रुचिमा दधातु प्रजापतिः सविता सोमो अग्निः ॥६॥
उप त्वा नमसा वयं होतर्वैश्वानर स्तुमः ।
स नः प्रजास्वात्मसु गोषु प्राणेषु जागृहि ॥७॥
विश्वाहा ते सदमिद्भरेमाश्वायेव तिष्ठते जातवेदः ।
रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम ॥८॥

इध्मेन । अग्ने । इच्छमानः । घृतेन । जुहोमि । हव्यम् । तरसे । बलाय ।
यावत् । ईशे । ब्रह्मणा । वन्दमानः । इमाम् । धियम् । शतऽसेयाय । देवीम् ॥ ३ ॥
इमाम् । अग्ने । शरणिम् । मीमृषः । नः । यम् । अध्वानम् । अगाम । दूरम् ।
शुनम् । नः । अस्तु । प्रऽपणः । विऽक्रयः । च । प्रतिऽपणः । फलिनम् । मा । कृणोतु ।
इदम् । हव्यम् । सम्ऽविदानौ । जुषेथाम् । शुनम् । नः । अस्तु । चरितम् । उत्थितम् । च ॥
येन । धनेन । प्रऽपणम् । चरामि । धनेन । देवाः । धनम् । इच्छमानः । तत् । मे ।
भूयः । भवतु । मा । कनीयः । अग्ने । सातऽघ्नः । देवान् । हविषा । नि । सेध ॥ ५ ॥
येन । धनेन । प्रऽपणम् । चरामि । धनेन । देवाः । धनम् । इच्छमानः ।
तस्मिन् । मे । इन्द्रः । रुचिम् । आ । दधातु । प्रजाऽपतिः । सविता । सोमः । अग्निः ॥६॥
उप । त्वा । नमसा । वयम् । होतः । वैश्वानर । स्तुमः ।
सः । नः । प्रऽजासु । आत्मऽसु । गोषु । प्राणेषु । जागृहि ॥ ७ ॥
विश्वाहा । ते । सदम् । इत् । भरेम । अश्वायऽइव । तिष्ठते । जातऽवेदः ।
रायः । पोषेण । सम् । इषा । मदन्तः । मा । ते । अग्ने । प्रतिऽवेशाः । रिषाम ॥८॥

## Agniḥ

**III.15.3** Desirous of wealth and overwhelming might, I offer you, O adorable Lord, my dedicated actions, further enlivened by devotion, and supported by knowledge. Praising you with sacred hymns, as much as I can, I propitiate you that you may render this praise resplendent with infinite treasure.(Cf.Ṛv. III.18.3)

## Purchase and sale

**III.15.4** O adorable Lord, may you pardon this offence of ours that we have taken to such a distant path. May delightful be the deal and the sale. May the counter-deal also make me fruitful. May both of you enjoy this offering in friendly accord. May the turn-over as well as the profit be delightful to me.

**III.15.5** O enlightened ones, may this money, with which I strike my deals, desiring money out of money, go on increasing for me; may it never decrease. O adorable leader, may you appease with offerings those enlightened ones who want to kill the profit.

**III.15.6** O enlightened ones, may in this money, with which I strike my deals, desiring money out of money, the resplendent Lord (indra) give me pleasure, and so may do the Lord of creatures (prajapati), the inspirer Lord (savitṛ), the blissful Lord (soma) and the adorable Lord (agni).

**III.15.7** O fire divine, invoker of enlightened ones and benefactor of all men, we approach you with praise and homage. May you keep awake in our progeny (prajāsu), in ourselves, in our sense organs (goṣu and in our vital breaths (prāṇeṣu).

**III.15.8** O knower of all (jātaveda) to you, staying at home, we bring offering as to a horse. Rejoicing in riches and nourishment as well as plenty of food, O adorable leader, may we, your neighbours, suffer no harm.

( १६ ) षोडशं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्याथर्वा ऋषिः । अग्नीन्द्रादयो मन्त्रोक्ता देवताः । (१) प्रथमर्च आर्षी जगती, (२-३, ५-७) द्वितीयातृतीययोः पञ्चम्यादितृचस्य च त्रिष्टुप्, (४) चतुर्थ्याश्च भुरिक्पङ्क्तिश्छन्दांसि ॥

प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विना ।
प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रं हवामहे ॥१॥
प्रातर्जितं भगमुग्रं हवामहे वयं पुत्रमदितेर्यो विधर्ता ।
आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥२॥
भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः ।
भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ॥३॥
उतेदानीं भगवन्तः स्यामोत प्रपित्व उत मध्ये अह्नाम् ।
उतोदितौ मघवन्त्सूर्यस्य वयं देवानां सुमतौ स्याम ॥४॥
भग एव भगवाँ अस्तु देवस्तेना वयं भगवन्तः स्याम ।
तं त्वा भग सर्व इज्जोहवीमि स नो भग पुरएता भवेह ॥५॥
समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय ।
अर्वाचीनं वसुविदं भगं मे रथमिवाश्वा वाजिन आ वहन्तु ॥६॥

प्रातः । अग्निम् । प्रातः । इन्द्रम् । हवामहे । प्रातः । मित्रावरुणा । प्रातः । अश्विना ।
प्रातः । भगम् । पूषणम् । ब्रह्मणः । पतिम् । प्रातः । सोमम् । उत । रुद्रम् । हवामहे ॥ १ ॥
प्रातःऽजितम् । भगम् । उग्रम् । हवामहे । वयम् । पुत्रम् । अदितेः । यः । विऽधर्ता ।
आध्रः । चित् । यम् । मन्यमानः । तुरः । चित् । राजा । चित् । यम् । भगम् । भक्षि । इति । आह ।
भग । प्रऽनेतः । भग । सत्यऽराधः । भग । इमाम् । धियम् । उत् । अव । ददत् । नः ।
भग । प्र । नः । जनय । गोभिः । अश्वैः । भग । प्र । नृऽभिः । नृऽवन्तः । स्याम ॥ ३ ॥
उत । इदानीम् । भगऽवन्तः । स्याम । उत । प्रऽपित्वे । उत । मध्ये । अह्नाम् ।
उत । उत्ऽइतौ । मघऽवन् । सूर्यस्य । वयम् । देवानाम् । सुऽमतौ । स्याम ॥ ४ ॥
भगः । एव । भगऽवान् । अस्तु । देवः । तेन । वयम् । भगऽवन्तः । स्याम ।
तम् । त्वा । भग । सर्वः । इत् । जोहवीमि । सः । नः । भग । पुरःऽएता । भव । इह ॥५॥
सम् । अध्वराय । उषसः । नमन्त । दधिक्रावाऽइव । शुचये । पदाय ।
अर्वाचीनम् । वसुऽविदम् । भगम् । मे । रथम्ऽइव । अश्वाः । वाजिनः । आ । वहन्तु ॥६॥

## Agni - Indra Pair

**III.16.1** We invoke at the morning the fire - divine; at dawn, the Lord of Light and Plasma; at dawn, the pair of twin divines; at dawn, the Lord of riches and nourishment; and universal priest at the morning , the Lord of Bliss and Vitality.(Cf.Ṛv. VII.41.1)( A morning invocation to divine Lord and Nature's bounties; agni,indra,mitra,varuṇa,aśvinau, bhaga, pūṣan, brahmanaspati, soma and rudra)

**III.16.2** We invoke at dawn the powerful gracious bounty, āditya, the son of Mother Infinity, who is the sustainer of the universe, to whom the common man, even the opulent one praise and say: " give me (wealth) for my enjoyment".(Cf. Ṛv VII.41.2)

**III.16.3** O Lord gracious, the foremost guide to our sacred work and faithful promisor of wealth, may you, granting our wishes, make our ceremony effective, and enrich us with wisdom and vitality. May we, O gracious Lord, be rich in leaders and followers.(Gobhih = with wisdom; aśvaih = with vitality.) (Cf. Ṛv VII.41.3)

**III.16.4** May we, at this hour be fortunate, also in the forenoon or at midday, or at sun-rise; may we, O bounteous Lord, be happy in the loving kindness of all divine powers. (Cf. Ṛv VII.41.4)

**III.16.5** O gracious Lord, possessor of graces as you are, through you, may we obtain the graces. Every one, verily, repeatedly invokes you. O gracious Lord, may you be our champion at this solemnity. (Cf. Ṛv. VII.41.5)

**III.16.6** May the dawns come to bless our worship with the speed of cyclone (dadhikrau) moving to its target. As strong steeds draw a chariot, may they (these dawns) bring me hitherward grace, the bestower of prosperity. (Cf. Ṛv. VII.41.6)

अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः ।
घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥७॥

अश्वऽवतीः । गोऽमतीः । नः । उषसः । वीरऽवतीः । सदम् । उच्छन्तु । भद्राः ।
घृतम् । दुहानाः । विश्वतः । प्रऽपीताः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥७॥

( १७ ) सप्तदशं सूक्तम्

(१-९) नवर्चस्यास्य सूक्तस्य विश्वामित्र ऋषिः । सीता देवता । (१) प्रथमर्च आर्षी गायत्री, (२, ५, ९) द्वितीयापञ्चमीनवमीनां त्रिष्टुप्, (३) तृतीयायाः पथ्यापङ्क्तिः, (४, ६) चतुर्थीषष्ठयोरनुष्टुप्, (७) सप्तम्या विराट् पुर उष्णिक्, (८) अष्टम्याश्च निचृदनुष्टुप् छन्दांसि ॥

सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् । धीरा देवेषु सुम्नयौ ॥१॥
युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह बीजम् ।
विराजः श्नुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमा यवन् ॥२॥
लाङ्गलं पवीरवत्सुशीमं सोमसत्सरु ।
उदिद्वपतु गामविं प्रस्थावद्रथवाहनं पीबरीं च प्रफर्व्यम् ॥३॥
इन्द्रः सीतां नि गृह्णातु तां पूषाभि रक्षतु । सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥४॥
शुनं सुफाला वि तुदन्तु भूमिं शुनं कीनाशा अनु यन्तु वाहान् ।
शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तमस्मै ॥५॥
शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम् । शुनं वरत्रा बध्यन्तां शुनमष्ट्रामुदिङ्गय ॥६॥

सीरा । युञ्जन्ति । कवयः । युगा । वि । तन्वते । पृथक् । धीराः । देवेषु । सुम्नऽयौ ॥ १ ॥
युनक्त । सीरा । वि । युगा । तनोत । कृते । योनौ । वपत । इह । बीजम् । विऽराजः ।
श्नुष्टिः । सऽभराः । असत् । नः । नेदीयः । इत् । सृण्यः । पक्वम् । आ । यवन् ॥२॥
लाङ्गलम् । पवीरऽवत् । सुऽशीमम् । सोमसत्ऽसरु ।
उत् । इत् । वपतु । गाम् । अविम् । प्रस्थाऽवत् । रथऽवाहनम् । पीबरीम् । च । प्रऽफर्व्यम् ॥३॥
इन्द्रः । सीताम् । नि । गृह्णातु । ताम् । पूषा । अभि । रक्षतु ।
सा । नः । पयस्वती । दुहाम् । उत्तराम्ऽउत्तराम् । समाम् ॥ ४ ॥
शुनम् । सुऽफालाः । वि । तुदन्तु । भूमिम् । शुनम् । कीनाशाः । अनु । यन्तु । वाहान् ।
शुनासीरा । हविषा । तोशमाना । सुऽपिप्पलाः । ओषधीः । कर्तम् । अस्मै ॥ ५ ॥
शुनम् । वाहाः । शुनम् । नरः । शुनम् । कृषतु । लाङ्गलम् ।
शुनम् । वरत्राः । बध्यन्ताम् । शुनम् । अष्ट्राम् । उत् । इङ्गय ॥ ६ ॥

**III.16.7** May the auspicious mornings dawn on us ever,with wealth of vitality (aśvavatī), with the wealth of wisdom (gomatī) and valiant prosperity (vīravatī). May she come streaming with all abundance and affection. May you along with the divine forces ever cherish us with blessings.

## Sītā - Furrow

**III.17.1** The wise farmers (kavayaḥ) harness the ploughs (sīra); they extend severally the yokes (yuga)- they the wise ones (dhīra), with a longing for favour (sumnayau) towards the enlightened experts (deveṣu). (also Ṛv. X. 101.4)

**III.17.2** Harness the ploughs, O people, and extend the yokes, scatter (vapata) the seed (bījam) here in the prepared womb (yonau). May the bunch (śnuṣṭiḥ) of virāj (either prayer or an anna, grain) be burdened (sabharā) for us. May the sickles draw in (ā-yavan) the ripe grain (pakvama yavan) yet closer (asannah) (Virāj = prayer,or anna,grain; Srṇyah = near the hook or sickle) (Also Ṛv. X.101.3; Yv. XII.68)

**III.17.3** Let the plough (lāṇgala),lance-pointed (pavītra-vat) well-lying, with nicely smoothed handle, turn up (ud-vap) cow, sheep (gām, avim) an on-going chariot-frame (rathavāhanam) and a plump (pīvarī) which (prapharvyam, working girl). (Also Yv.XII.71-Variation).

**III.17.4** May the resplendent Lord, Indra, hold down the furrow (sītā), let Pusan, the lord of protection defend it. Let it rich in milk, furnish us more and more every summer.(Also Ṛg. IV.47.7)

**III.17.5** Successfully (śunam), may the good ploughsharer (suphālā) insert or thrust apart the soil (earth, bhūmi); successfully,let the plough men(kīnāśaḥ) follow the beasts of draft (vāhān), O śunāsira, do you both, furnishing the oblation (or giving the ceremonial āhuti) make the herbs (oṣadhi) rich in berries. (suphala) for this person. (also Ṛv. IV.47.8)

**III.17.6** With full success (śunam), let the draft-animals (vāhāḥ) with all success, the men, also successfully, let the plough (lāṇgalm) plough the field ; successfully, let the straps (varatrā) be bound, and with all success may you brandish the goad (aṣṭrām). (Also Ṛv. IV.57.4)

शुनासीरेह स्म मे जुषेथाम् । यद्दिवि चक्रथुः पयस्तेनेमामुप सिञ्चतम् ॥७॥
सीते वन्दामहे त्वार्वाची सुभगे भव । यथा नः सुमना असो यथा नः सुफला भुवः ॥८॥
घृतेन सीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः ।
सा नः सीते पयसाभ्याववृत्स्वोर्जस्वती घृतवत्पिन्वमाना ॥९॥

शुनासीरा । इह । स्म । मे । जुषेथाम् ।
यत् । दिवि । चक्रथुः । पयः । तेन । इमाम् । उप । सिञ्चतम् ॥ ७ ॥
सीते । वन्दामहे । त्वा । अर्वाची । सुऽभगे । भव ।
यथा । नः । सुऽमनाः । असः । यथा । नः । सुऽफला । भुवः ॥८ ॥
घृतेन । सीता । मधुना । सम्ऽअक्ता । विश्वैः । देवैः । अनुऽमता । मरुत्ऽभिः ।
सा । नः । सीते । पयसा । अभिऽआववृत्स्व । ऊर्जस्वती । घृतऽवत् । पिन्वमाना ॥ ९ ॥

( १८ ) अष्टादशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्याथर्वा ऋषिः । वनस्पतिः ( बाणपर्ण्योषधिः ) देवता । (१-३, ५) प्रथमादितृचस्य पञ्चम्याश्चानुष्टुप्, (४) चतुर्थ्या अनुष्टुब्गर्भा चतुष्पादुष्णिक्, (६) षष्ठ्याश्चोष्णिग्गर्भा पथ्यापङ्क्तिश्छन्दांसि ॥

इमां खनाम्योषधिं वीरुधां बलवत्तमाम् ।
यया सपत्नीं बाधते यया संविन्दते पतिम् ॥१॥
उत्तानपर्णे सुभगे देवजूते सहस्वति ।
सपत्नीं मे परा णुद पतिं मे केवलं कृधि ॥२॥
नहि ते नाम जग्राह नो अस्मिन्रमसे पतौ ।
परामेव परावतं सपत्नीं गमयामसि ॥३॥

इमाम् । खनामि । ओषधिम् । वीरुधाम् । बलवत्ऽतमाम् ।
यया । सऽपत्नीम् । बाधते । यया । सम्ऽविन्दते । पतिम् ॥ १ ॥
उत्तानऽपर्णे । सुऽभगे । देवऽजूते । सहस्वति ।
सऽपत्नीम् । मे । परा । नुद । पतिम् । मे । केवलम् । कृधि ॥ २ ॥
नहि । ते । नाम । जग्राह । नो इति । अस्मिन् । रमसे । पतौ ।
पराम् । एव । पराऽवतम् । सऽपत्नीम् । गमयामसि ॥ ३ ॥

**III.17.7** O sunāsīra, may both of you enjoy me here whatsoever milk, you have produced in heaven (divi cakrathuḥ) may you pour all that on this furrow. (Also Ṛv. IV.57.5)

**III.17.8** O sīte (furrow), we pay our best homage to you, may you kindly turn on this side, O you bring fortune to us, we have full support from you. May you bring good fruits for us. (Also Ṛv. IV.57.6)

**III.17.9** Let the furrow (sītā) be irrigated with sweet waters. May it be favoured by all the bounties of Nature (viśvedevaih) and the cloud-bearing winds (marudbhiḥ). As such O furrow, may you turn towards us full of milk, invigorating and swelling with ghee (clarified butter).

## Vanaspati - Vāṇaparṇī

**III.18.1** I hereby dig up this herb, most potent among creepers, with which one repells the rival wife (sapatnī) and with which one wins the husband for herself alone. (oṣadhi = drug; vīrudha = drug in the form of a creeper) (Cf.Ṛv. X.145.1)

**III.18.2** O uttānaparṇi (having leaves with face upwards), bringer of sexual bliss, suggested by the learned ones, O vanquisher, may you drive away my rival and make my husband mine only.(Cf. Ṛv. X.145.2)

**III.18.3** I would not even utter your name, who dally(ramase) with this husband of ours. Far, remote and even further, I drive away my rival wife.(Cf. Rv. X.145.4)

उत्तराहमुत्तर उत्तरेदुत्तराभ्यः ।
अधः सपत्नी या ममाधरा साधराभ्यः ॥४॥
अहमस्मि सहमानाथो त्वमसि सासहिः ।
उभे सहस्वती भूत्वा सपत्नीं मे सहावहै ॥५॥
अभि तेऽधां सहमानामुप तेऽधां सहीयसीम् ।
मामनु प्र ते मनो वत्सं गौरिव धावतु पथा वारिव धावतु ॥६॥

उत्ऽतरा । अहम् । उत्ऽतरे । उत्ऽतरा । इत् । उत्ऽतराभ्यः ।
अधः । सऽपत्नी । या । मम । अधरा । सा । अधराभ्यः ॥ ४ ॥
अहम् । अस्मि । सहमाना । अथो इति । त्वम् । असि । ससहिः ।
उभे इति । सहस्वती इति । भूत्वा । सऽपत्नीम् । मे । सहावहै ॥ ५ ॥
अभि । ते । अधाम् । सहमानाम् । उप । ते । अधाम् । सहीयसीम् ।
माम् । अनु । प्र । ते । मनः । वत्सम् । गौःऽइव । धावतु । पथा । वाःऽइव । धावतु ॥६॥

( १९ ) एकोनविंशं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्य वसिष्ठ ऋषिः । विश्वे देवाः, चन्द्रमा इन्द्रो वा देवता । (१) प्रथमर्चः पथ्याबृहती, (२, ४) द्वितीयाचतुर्थ्योरनुष्टुप् , (३) तृतीयाया भुरिग्बृहती, (५) पञ्चम्यास्त्रिष्टुप् , (६) षष्ठयास्त्र्यवसाना षट्पदा त्रिष्टुप्ककुम्मतीगर्भातिजगती, (७) सप्तम्या विराडास्तारपङ्क्तिः, (८) अष्टम्याश्च पथ्यापङ्क्तिश्छन्दांसि ॥

संशितं म इदं ब्रह्म संशितं वीर्यं१ बलम् ।
संशितं क्षत्रमजरमस्तु जिष्णुर्येषामस्मि पुरोहितः ॥१॥
समहमेषां राष्ट्रं स्यामि समोजो वीर्यं१ बलम् ।
वृश्चामि शत्रूणां बाहूननेन हविषाहम् ॥२॥
नीचैः पद्यन्तामधरे भवन्तु ये नः सूरिं मघवानं पृतन्यान् ।
क्षिणामि ब्रह्मणामित्रानुन्नयामि स्वानहम् ॥३॥

समऽशितम् । मे । इदम् । ब्रह्म । समऽशितम् । वीर्य१म् । बलम् ।
समऽशितम् । क्षत्रम् । अजरम् । अस्तु । जिष्णुः । येषाम् । अस्मि । पुरःऽहितः ॥ १ ॥
सम् । अहम् । एषाम् । राष्ट्रम् । स्यामि । सम् । ओजः । वीर्य१म् । बलम् ।
वृश्चामि । शत्रूणाम् । बाहून् । अनेन । हविषा । अहम् ॥ २ ॥
नीचैः । पद्यन्ताम् । अधरे । भवन्तु । ये । नः । सूरिम् । मघऽवानम् । पृतन्यान् ।
क्षिणामि । ब्रह्मणा । अमित्रान् । उत् । नयामि । स्वान् । अहम् ॥ ३ ॥

**III.18.4** O supreme one, may I become superior, superior even to the superiors. May my rival wife go down, lower than the lowest.(Cf.Ṛv. X.145.3)

**III.18.5** I am conquering by nature. You also are vanquisher of enemies. Let both of us, full of conquering power, vanquish my rival (wife). (Cf.Ṛv. X.145.5) (sahamānā; sāsahi; sahasvatī and sahāvahai-abhibhavitri = conquering one, vanquisher and so on.)

**III.18.6** I have girt you, the conquering plant all around. I have put you, even more conquering, near me. May your mind speed towards me, as a cow runs after her calf, as the water runs along its channel. (Cf.Ṛv. X.145.6) (sahamānā, sāsahi, sahasvatīand sahīyasī).

**Viśvedevaḥ**

**III.19.1** Sharpened (samśitam) is this knowledge of mine, and sharpened is my vigour (vīrya) and power (bala). May sharpened be the victorous and never diminishing ruling power of those whom do I lead.

**III.19.2** I hereby quicken the princely sway of these people. I quicken their strength, vigour and power. With this offering, I slash off the arms of the enemies. (syāmi = śyāmi, rend away, slash lash, cut, from.

**III.19.3** May they, who attack our bounteous and learned leader, fall with faces downwards; may they be subdued. With my knowledge, I destroy the enemies and lead our own men up to glory.

तीक्ष्णीयांसः परशोरग्नेस्तीक्ष्णतरा उत ।
इन्द्रस्य वज्रात्तीक्ष्णीयांसो येषामस्मि पुरोहितः ॥४॥
एषामहमायुधा सं स्याम्येषां राष्ट्रं सुवीरं वर्धयामि ।
एषां क्षत्रमजरमस्तु जिष्ण्वे३षां चित्तं विश्वेऽवन्तु देवाः ॥५॥
उद्धर्षन्तां मघवन्वाजिनान्युद्वीराणां जयतामेतु घोषः ।
पृथग्घोषा उलुलयः केतुमन्त उदीरताम्
देवा इन्द्रज्येष्ठा मरुतो यन्तु सेनया ॥६॥
प्रेता जयता नर उग्रा वः सन्तु बाहवः ।
तीक्ष्णेषवोबलधन्वनो हतोग्रायुधा अबलानुग्रबाहवः ॥७॥
अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते ।
जयामित्रान्प्र पद्यस्व जह्ये३षां वरंवरं मामीषां मोचि कश्चन ॥८॥

तीक्ष्णीयांसः । परशोः । अग्नेः । तीक्ष्णऽतराः । उत ।
इन्द्रस्य । वज्रात् । तीक्ष्णीयांसः । येषाम् । अस्मि । पुरःऽहितः ॥ ४ ॥
एषाम् । अहम् । आयुधा । सम् । स्यामि । एषाम् । राष्ट्रम् । सुऽवीरम् । वर्धयामि ।
एषाम् । क्षत्रम् । अजरम् । अस्तु । जिष्णु । एषाम् । चित्तम् । विश्वे । अवन्तु । देवाः ॥५॥
उत् । हर्षन्ताम् । मघऽवन् । वाजिनानि । उत् । वीराणाम् । जयताम् । एतु । घोषः । पृथक् ।
घोषाः । उलुलयः । केतुऽमन्तः । उत् । ईरताम् । देवाः । इन्द्रऽज्येष्ठाः । मरुतः । यन्तु । सेनया ॥
प्र । इत । जयत । नरः । उग्राः । वः । सन्तु । बाहवः ।
तीक्ष्णऽइषवः । अबलऽधन्वनः । हत । उग्रऽआयुधाः । अबलान् । उग्रऽबाहवः ॥ ७ ॥
अवऽसृष्टा । परा । पत । शरव्ये । ब्रह्मऽसंशिते । जय । अमित्रान् । प्र । पद्यस्व ।
जहि । एषाम् । वरम्ऽवरम् । मा । अमीषाम् । मोचि । कः । चन ॥ ८ ॥

( २० ) विंशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्य वसिष्ठ ऋषिः । (१-२, ५) प्रथमाद्वितीययोर्ऋचोः पञ्चम्याश्चाग्निः, (३-४, ६-१०) तृतीयाचतुर्थ्योः षष्ठ्यादिपञ्चानाञ्च भगादयो देवताः । (१-५, ७, ९-१०) प्रथमादिपञ्चानां सप्तमीनवमीदशमीनाञ्चानुष्टुप्, (६) षष्ठ्याः पथ्यापङ्क्तिः, (८) अष्टम्याश्च विराड्जगती छन्दांसि ॥

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आ रोहाधा नो वर्धया रयिम् ॥१॥

अयम् । ते । योनिः । ऋत्वियः । यतः । जातः । अरोचथाः ।
तम् । जानन् । अग्ने । आ । रोह । अध । नः । वर्धय । रयिम् ॥ १ ॥

**III.19.4** Sharper than an axe, sharper even than the fire and sharper than the thunder-bolt of the resplendent Lord, are they whom I lead (in the battle).

**III.19.5** I sharpen their weapons. I make their nation prosper with brave young men. May their victorious ruling power remain undiminished. May all the enlightened ones keep their morale high.

**III.19.6** O bounteous Lord, may our weapons cheer up. May the shout of winning heroes go up. May the soldiers bearing their standards raise the ullullu cry of joy severally. May the storm-troopers led by the king himself, accompany our army.

**III.19.7** Move forward O men, and win the victory Let your arms be fierce. Let you with sharpened arrows kill the enemies having weak bows. Let you having formidable weapons and powerful arms finish the powerless enemies.(Cf. Ṛv. X.103.13)

**III.19.8** O killer arrow, sharpened with the scientific knowledge, having been shot, let you go far and fall. Let you enter the enemies and conquer them. Kill each and every prominent among them. Let none of them escape.(Cf.Ṛv. VI.75.16)

### Agni

**III.20.1** O fire divine, this is your regular abode , born out of which you shine forth. Knowing that, may you ascend to it. Thereafter may you increase our riches.

अग्ने अच्छा वदेह नः प्रत्यङ्नः सुमना भव ।
प्र णो यच्छ विशां पते धनदा असि नस्त्वम् ॥२॥
प्र णो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः ।
प्र देवीः प्रोत सूनृता रयिं देवी दधातु मे ॥३॥
सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे ।
आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥४॥
त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय ।
त्वं नो देव दातवे रयिं दानाय चोदय ॥५॥

इन्द्रवायू उभाविह सुहवेह हवामहे ।
यथा नः सर्व इज्जनः संगत्यां सुमना असद्दानकामश्च नो भुवत् ॥६॥
अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय ।
वातं विष्णुं सरस्वतीं सवितारं च वाजिनम् ॥७॥

अग्ने । अच्छ । वद । इह । नः । प्रत्यङ् । नः । सुऽमनाः । भव ।
प्र । नः । यच्छ । विशाम् । पते । धनऽदाः । असि । नः । त्वम् ॥ २ ॥
प्र । नः । यच्छतु । अर्यमा । प्र । भगः । प्र । बृहस्पतिः ।
प्र । देवीः । प्र । उत । सूनृता । रयिम् । देवी । दधातु । मे ॥ ३ ॥
सोमम् । राजानम् । अवसे । अग्निम् । गीःऽभिः । हवामहे ।
आदित्यम् । विष्णुम् । सूर्यम् । ब्रह्माणम् । च । बृहस्पतिम् ॥ ४ ॥
त्वम् । नः । अग्ने । अग्निऽभिः । ब्रह्म । यज्ञम् । च । वर्धय ।
त्वम् । नः । देव । दातवे । रयिम् । दानाय । चोदय ॥ ५ ॥
इन्द्रवायू इति । उभौ । इह । सुऽहवा । इह । हवामहे । यथा । नः । सर्वः । इत् । जनः ।
सम्ऽगत्याम् । सुऽमनाः । असत् । दानऽकामः । च । नः । भुवत् ॥ ६ ॥
अर्यमणम् । बृहस्पतिम् । इन्द्रम् । दानाय । चोदय ।
वातम् । विष्णुम् । सरस्वतीम् । सवितारम् । च । वाजिनम् ॥७॥

**III.20.2** O adorable Lord (agne), may you speak fovourably to us. May you be friendly inclined towards us. O Lord of the people, give to us liberally. For us you are the bestower of wealth.(Cf. Ṛv. X.141.1)

### Aryaman - Bhagaḥ Bṛhaspatiḥ Deviḥ

**III.20.3** May the ordainer Lord (aryamā) give liberally to us, may the Lord of all-round prosperity (bhaga) and the lord supreme (bṛhaspati) give; may the divinities and the truthful speech divine bestow riches on me.(Cf. Ṛv. X.141.2)

**III.20.4** With our prayers, for protection we invoke the blissful Lord (soma), the sovereign (rājānam), also the adorable Lord (agni), the Lord of eternity (āditya), the omnipresent (viṣṇu), the impeller (sūrya), the Lord of knowledge (brahmāṇam) and the Lord supreme (bṛhaspati). (Cf.Ṛv. X.141.3)

### Agni

**III.20.5** O adorable Lord, may you increase our knowledge and sacrifice with fires divine. O Lord, may you urge the donor to give riches to us. (Cf.Ṛv..X.141.6)

### Indra - Vāyu Pair

**III.20.6** O lord resplendent and omnipresent,here we invoke you, easy to invoke, so that all the people who come in our contact, may be favorably inclined towards and become willing to give gifts to us. (Ṛv. X.141.4)

### Aryaman

**III.20.7** (With your prayers) urge the ordainer Lord (aryaman) the Lord supreme (bṛhaspati) the resplendent Lord (indra), Lord of motion (vātam), the omnipresent Lord (Viṣṇu), the speech divine (sarasvatī) and the quick inspirer Lord (savitṛ vājinam) to favour us with bountiful donations. (Cf. Ṛv. X.141.5)

वाजस्य नु प्रसवे सं बभूविमेमा च विश्वा भुवनान्यन्तः ।
उतादित्सन्तं दापयतु प्रजानन्रयिं च नः सर्ववीरं नि यच्छ ॥८॥
दुह्रां मे पञ्च प्रदिशो दुह्रामुर्वीर्यथाबलम् ।
प्रापेयं सर्वा आकूतीर्मनसा हृदयेन च ॥९॥
गोसनिं वाचमुदेयं वर्चसा माभ्युदिहि ।
आ रुन्धां सर्वतो वायुस्त्वष्टा पोषं दधातु मे ॥१०॥

वाजस्य । नु । प्रऽसवे । सम् । बभूविम । इमा । च । विश्वा । भुवनानि । अन्तः ।
उत । अदित्सन्तम् । दापयतु । प्रऽजानन् । रयिम् । च । नः । सर्वऽवीरम् । नि । यच्छ ॥८॥
दुह्राम् । मे । पञ्च । प्रऽदिशः । दुह्राम् । उर्वीः । यथाऽबलम् ।
प्र । आपेयम् । सर्वाः । आऽकूतीः । मनसा । हृदयेन । च ॥ ९ ॥
गोऽसनिम् । वाचम् । उत्ऽदेयम् । वर्चसा । मा । अभिऽउदिहि ।
आ । रुन्धाम् । सर्वतः । वायुः । त्वष्टा । पोषम् । दधातु । मे ॥ १० ॥

( २१ ) एकविंशं सूक्तम्

(१-१०) दशर्चस्यास्य सूक्तस्य वसिष्ठ ऋषिः । (१-७) प्रथमादिसप्तर्चामग्नयः, (८-१०) अष्टम्यादितृचस्य च मन्त्रोक्ता देवताः । (१) प्रथमायाः पुरोऽनुष्टुप्त्रिष्टुप्, (२-३, ८) द्वितीयातृतीयाष्टमीनां भुरिक् त्रिष्टुप्, (४) चतुर्थ्यास्त्रिष्टुप्, (५) पञ्चम्या जगती, (६) षष्ठ्या उपरिष्टाद्विराड्बृहती, (७) सप्तम्या विराड्गर्भा त्रिष्टुप्, (९) नवम्या निचृदनुष्टुप्, (१०) दशम्याश्चानुष्टुप् छन्दांसि ॥

ये अग्नयो अप्स्व१न्तर्ये वृत्रे ये पुरुषे ये अश्मसु ।
य आविवेशौषधीर्यो वनस्पतींस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥१॥
यः सोमे अन्तर्यो गोष्वन्तर्य आविष्टो वयःसु यो मृगेषु ।
य आविवेश द्विपदो यश्चतुष्पदस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥२॥
य इन्द्रेण सरथं याति देवो वैश्वानर उत विश्वदाव्यः ।
यं जोहवीमि पृतनासु सासहिं तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥३॥

ये । अग्नयः । अप्ऽसु । अन्तः । ये । वृत्रे । ये । पुरुषे । ये । अश्मऽसु ।
यः । आऽविवेश । ओषधीः । यः । वनस्पतीन् । तेभ्यः । अग्निऽभ्यः । हुतम् । अस्तु । एतत् ॥ १ ॥
यः । सोमे । अन्तः । यः । गोषु । अन्तः । यः । आऽविष्टः । वयःऽसु । यः । मृगेषु ।
यः । आऽविवेश । द्विऽपदः । यः । चतुःऽपदः । तेभ्यः । अग्निऽभ्यः । हुतम् । अस्तु । एतत् ॥ २ ॥
यः । इन्द्रेण । सऽरथम् । याति । देवः । वैश्वानरः । उत । विश्वऽदाव्यः ।
यम् । जोहवीमि । पृतनासु । ससहिम् । तेभ्यः । अग्निऽभ्यः । हुतम् । अस्तु । एतत् ॥ ३ ॥

## All Bhuvana

**III.20.8** By the growth of food, we have come into existence and all these beings are within (dependent on) it. May the Lord, knowing our heart's desires, make the unwilling donor willing to give, and bestow on us riches along with all the brave sons for ever.

## Five Regions

**III.20.9** May the five regions of heaven pour their milk for me; may the spacious earths pour milk according to their capacity. May I obtain fulfillment of all desires of my mind and heart. (pañca diśaḥ = five regions-east, south, west,north and middle or central one, madhya.)

## Vāyu and Tvaṣṭṛ

**III.20.10** May I speak words winning cows for me. May the vital wind surround me on all sides. May the supreme architect provide nourishment for me.

## Agniḥ

**III.21.1** The fires, that exist within waters, that exist in clouds, that in man, that in rocks, and that have entered the plants and the trees, to those fires let this oblation be offered.

**III.21.2** The fire, that exist in the medicinal herb, that exists within cattle, that has entered into the birds, that into the wild animals, that has entered into bipeds and that into quadrupeds -to those fires let this oblation be offered.

**III.21.3** To the fire-divine that rides with the resplendent one in the same chariot, to the fire beneficial for all men, to the fire that consumes all, and to the fire, whom, the conqueror one, invoke while fighting battles - to all those fires let this oblation be offered.

यो देवो विश्वाद्यमु काममाहुर्यं दातारं प्रतिगृह्णन्तमाहुः ।
यो धीरः शक्रः परिभूरदाभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥४॥
यं त्वा होतारं मनसाभि संविदुस्त्रयोदश भौवनाः पञ्च मानवाः ।
वर्चोधसे यशसे सूनृतावते तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥५॥
उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे ।
वैश्वानरज्येष्ठेभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥६॥
दिवं पृथिवीमन्वन्तरिक्षं ये विद्युतमनुसंचरन्ति ।
ये दिक्ष्वन्तर्ये वाते अन्तस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥७॥
हिरण्यपाणिं सवितारमिन्द्रं बृहस्पतिं वरुणं मित्रमग्निम् ।
विश्वान्देवानङ्गिरसो हवामह इमं क्रव्यादं शमयन्त्वग्निम् ॥८॥
शान्तो अग्निः क्रव्याच्छान्तः पुरुषरेषणः ।
अथो यो विश्वदाव्यस्तं क्रव्यादमशीशमम् ॥९॥

यः । देवः । विश्वऽअत् । यम् । ऊं इति । कामम् । आहुः । यम् । दातारम् । प्रतिऽगृह्णन्तम् । आहुः ।
यः । धीरः । शक्रः । परिऽभूः । अदाभ्यः । तेभ्यः । अग्निऽभ्यः । हुतम् । अस्तु । एतत् ॥४॥
यम् । त्वा । होतारम् । मनसा । अभि । सम्ऽविदुः । त्रयःऽदश । भौवनाः । पञ्च । मानवाः ।
वर्चःऽधसे । यशसे । सूनृताऽवते । तेभ्यः । अग्निऽभ्यः । हुतम् । अस्तु । एतत् ॥ ५ ॥
उक्षऽअन्नाय । वशाऽअन्नाय । सोमऽपृष्ठाय । वेधसे ।
वैश्वानरऽज्येष्ठेभ्यः । तेभ्यः । अग्निऽभ्यः । हुतम् । अस्तु । एतत् ॥ ६ ॥
दिवम् । पृथिवीम् । अनु । अन्तरिक्षम् । ये । विऽद्युतम् । अनुऽसंचरन्ति ।
ये । दिक्षु । अन्तः । ये । वाते । अन्तः । तेभ्यः । अग्निऽभ्यः । हुतम् । अस्तु । एतत् ॥ ७ ॥
हिरण्यऽपाणिम् । सवितारम् । इन्द्रम् । बृहस्पतिम् । वरुणम् । मित्रम् । अग्निम् ।
विश्वान् । देवान् । अङ्गिरसः । हवामहे । इमम् । क्रव्यऽअदम् । शमयन्तु । अग्निम् ॥ ८ ॥
शान्तः । अग्निः । क्रव्यऽअत् । शान्तः । पुरुषऽरेषणः ।
अथो इति । यः । विश्वऽदाव्यः । तम् । क्रव्यऽअदम् । अशीशमम् ॥ ९ ॥

**III.21.4** Who the divine one is all-consuming, who is called Kāma (desire), who is called giver as well as the receiver, who is courageous, capable, over-whelming and invincible - to all those fires let this oblation be offered.

**III.21.5** To you, whom thirteen kinds of beings and five categories of men consider as the sacrifice in their minds, to the bestower of lusture, to the glory incarnate, and to one of truthful and pleasing speech - to all those fires let this oblation be offered. (trayodaśa bhauvanāh = 12 months + 1 extra- month or adhimāsa; pañca mānavāh = 5 seasons = vasanta + grīṣma + varṣā + śarad + winter (hemanta and śiśira combined)

**III.21.6** To giver of food-grains to bulls, to giver of food-grains to barren cows (vaśā), to the sage on whose back lies the devotional bliss (soma-pṛṣṭha), to the creator of the world and to those, whose elder is vaiśvānara, benefactor of all men, to all those fires let this oblation be offered.

**III.21.7** To those fires, that move in the sky, on the earth, in the midspace, that follow the lightning; that are within the quarters; that are within the storm, to all those fire, let this oblation be offered.

**Savitr**

**III.21.8** We, the radiant, hereby invoke the golden-handed (hiranyapāṇi) inspirer Lord, the resplendent Lord, the Lord supreme, the Lord friendly, venerable and adorable, and all the bounties of Nature - may they appease this flesh-devouring (kravyādam) fire.

**III.21.9** The fire has calmed down, calmed down is the flesh-devourer, the killer of men. Also I have calmed down the one, that is consumer of all (viśvadāvya, the dāvāgni, the forest-fire), the flesh-devourer.

**ये पर्वताः सोमपृष्ठा आप उत्तानशीवरीः ।**
**वातः पर्जन्य आदग्निस्ते क्रव्यादमशीशमन् ॥१०॥**

ये । पर्वताः । सोमऽपृष्ठाः । आपः । उत्तानऽशीवरीः ।
वातः । पर्जन्यः । आत् । अग्निः । ते । क्रव्यऽअदम् । अशीशमन् ॥ १० ॥

( २२ ) द्वाविंशं सूक्तम्

(१-६) षड्ऋचस्यास्य सूक्तस्य वसिष्ठ ऋषिः । बृहस्पतिर्विश्वे देवा वा देवताः । (१) प्रथमर्चो विराट् त्रिष्टुप् , (२, ५-६) द्वितीयापञ्चमीषष्ठीनामनुष्टुप् , (३) तृतीयायाः पञ्चपदा परानुष्टुब्विराडतिजगती, (४) चतुर्थ्याश्च त्र्यवसाना षट्पदा जगती छन्दांसि ॥

**हस्तिवर्चसं प्रथतां बृहद्यशो अदित्या यत्तन्व१ः संबभूव ।**
**तत्सर्वे समदुर्मह्यमेतद्विश्वे देवा अदितिः सजोषाः ॥१॥**
**मित्रश्च वरुणश्चेन्द्रो रुद्रश्च चेततुः ।**
**देवासो विश्वधायसस्ते माञ्जन्तु वर्चसा ॥२॥**
**येन हस्ती वर्चसा संबभूव येन राजा मनुष्ये१ष्वप्स्व१न्तः ।**
**येन देवा देवतामग्र आयन्तेन मामद्य वर्चसाग्ने वर्चस्विनं कृणु ॥३॥**
**यत्ते वर्चो जातवेदो बृहद्भवत्याहुतेः ।**
**यावत्सूर्यस्य वर्च आसुरस्य च हस्तिनः ।**
**तावन्मे अश्विना वर्च आ धत्तां पुष्करस्रजा ॥४॥**
**यावच्चतस्रः प्रदिशश्चक्षुर्यावत्समश्नुते ।**
**तावत्समैत्विन्द्रियं मयि तद्धस्तिवर्चसम् ॥५॥**

हस्तिऽवर्चसम् । प्रथताम् । बृहत् । यशः । अदित्याः । यत् । तन्व१ः । सम्ऽबभूव ।
तत् । सर्वे । सम् । अदुः । मह्यम् । एतत् । विश्वे । देवाः । अदितिः । सऽजोषाः ॥ १ ॥
मित्रः । च । वरुणः । च । इन्द्रः । रुद्रः । च । चेततु ।
देवासः । विश्वऽधायसः । ते । मा । अञ्जन्तु । वर्चसा ॥ २ ॥
येन । हस्ती । वर्चसा । सम्ऽबभूव । येन । राजा । मनुष्ये१षु । अप्ऽसु । अन्तः ।
येन । देवाः । देवताम् । अग्रे । आयन् । तेन । माम् । अद्य । वर्चसा । अग्ने । वर्चस्विनम् । कृणु ॥३॥
यत् । ते । वर्चः । जातऽवेदः । बृहत् । भवति । आऽहुतेः । यावत् । सूर्यस्य । वर्चः ।
आसुरस्य । च । हस्तिनः । तावत् । मे । अश्विना । वर्चः । आ । धत्ताम् । पुष्करऽस्रजा ॥४॥
यावत् । चतस्रः । प्रऽदिशः । चक्षुः । यावत् । सम्ऽअश्नुते ।
तावत् । सम्ऽऐतु । इन्द्रियम् । मयि । तत् । हस्तिऽवर्चसम् ॥ ५ ॥

**III.21.10** The mountains, on whose back the Soma (medicinal herb) grows, and the waters, that sleep calm and quiet, the storm, the rain-cloud, and the fire itself - these have stilled the flesh-devouring fire.

### Viśvedevāḥ, Bṛhaspatiḥ ; Varcaḥ

**III.22.1** May the elephantine vigour of great renown,that is born out of Aditi's (earth's) body, be famed far and wide. May all of them, all the bounties of Nature and the accordant Aditi, bestow that vigour on me.

**III.22.2** May the friendly Lord, the venerable Lord, the resplendent Lord, and the terrible punisher recognize me. May those bounties of Nature, that sustain all, infuse me with vigour.

**III.22.3** The vigour, with which the elephant is imbued; with which the king among men is infused; which lies within the waters; and with which,in the beginning , the enlightened ones gained their enlightenment, O adorable Lord, with that vigour, may you make me vigorous.

**III.22.4** O fire, your vigour, that becomes tremendous with the offerings (at the sacrifice), the vigour, that the Sun and the mighty elephant possess, with that vigour may the twin divine healers, adorned with lotus garlands (puṣkara-srajā), infuse me.

**III.22.5** As much as the four regions of heaven extend; as much as the eye does reach, so much may that elephantine vigour be infused in me toning up my sense-organs.

हस्ती मृगाणां सुषदामतिष्ठावान्बभूव हि ।
तस्य भगेन वर्चसाभि षिञ्चामि मामहम् ॥६॥

हस्ती । मृगाणाम् । सुऽसदाम् । अतिस्थाऽवान् । बभूव । हि ।
तस्य । भगेन । वर्चसा । अभि । सिञ्चामि । माम् । अहम् ॥ ६ ॥

### ( २३ ) त्रयोविंशं सूक्तम्

(१-६) षड्ऋचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । चन्द्रमा योनिर्वा देवता । (१-४) प्रथमादिचतसृणामृचामनुष्टुप्, (५) पञ्चम्या उपरिष्टाद्भुरिग्बृहती, (६) षष्ठ्याश्च स्कन्धोग्रीवी बृहती छन्दांसि ॥

येन वेहद्बभूविथ नाशयामसि तत्त्वत् ।
इदं तदन्यत्र त्वदप दूरे नि दध्मसि ॥१॥
आ ते योनिं गर्भ एतु पुमान्बाण इवेषुधिम् ।
आ वीरोऽत्र जायतां पुत्रस्ते दशमास्यः ॥२॥

पुमांसं पुत्रं जनय तं पुमाननु जायताम् ।
भवासि पुत्राणां माता जातानां जनयाश्च यान् ॥३॥
यानि भद्राणि बीजान्यृषभा जनयन्ति च ।
तैस्त्वं पुत्रं विन्दस्व सा प्रसूर्धेनुका भव ॥४॥
कृणोमि ते प्राजापत्यमा योनिं गर्भ एतु ते ।
विन्दस्व त्वं पुत्रं नारि यस्तुभ्यं शमसच्छमु तस्मै त्वं भव ॥५॥

येन । वेहत् । बभूविथ । नाशयामसि । तत् । त्वत् ।
इदम् । तत् । अन्यत्र । त्वत् । अप । दूरे । नि । दध्मसि ॥ १ ॥

आ । ते । योनिम् । गर्भः । एतु । पुमान् । बाणःऽइव । इषुऽधिम् ।
आ । वीरः । अत्र । जायताम् । पुत्रः । ते । दशऽमास्यः ॥ २ ॥
पुमांसम् । पुत्रम् । जनय । तम् । पुमान् । अनु । जायताम् ।
भवासि । पुत्राणाम् । माता । जातानाम् । जनयाः । च । यान् ॥ ३ ॥

यानि । भद्राणि । बीजानि । ऋषभाः । जनयन्ति । च ।
तैः । त्वम् । पुत्रम् । विन्दस्व । सा । प्रऽसूः । धेनुका । भव ॥ ४ ॥

कृणोमि । ते । प्राजाऽपत्यम् । आ । योनिम् । गर्भः । एतु । ते । विन्दस्व । त्वम् ।
पुत्रम् । नारि । यः । तुभ्यम् । शम् । असत् । शम् । ऊँ इति । तस्मै । त्वम् । भव ॥ ५ ॥

**III.22.6** Surely the elephant has become prominent among the animals pleasant to ride upon. with his splendour and vigour, I hereby grace myself. (This refers to the taming of wild elephant)

## Yoniḥ - Womb

**III.23.1** Wherewith you have become sterile, that fault we remove from you. Hereby we confine that to another place far away from you.

**III.23.2** May a male embryo come to your womb, just as an arrow comes to the quiver. Thereafter, may a hero be born here, your son, a ten-month babe.

**III.23.3** May you give birth to a manly son. May he be followed by (the birth of ) another male. So may you become mother of the sons born as well as those whom you will bear.

**III.23.4** Whatever are the propitious sperms and wherewith the bulls procreate, with those may you beget a son and as such may you become a breeding milch-cow.

**III.23.5** I perform an operation on you facilitating child-birth. May an embryo come to your womb. O woman, may you get a son, who will be a bliss to you. Let you also be a bliss to him.

यासां द्यौष्पिता पृथिवी माता समुद्रो मूलं वीरुधां बभूव ।
तास्त्वा पुत्रविद्याय दैवीः प्रावन्त्वोषधयः ॥६॥

यासाम् । द्यौः । पिता । पृथिवी । माता । समुद्रः । मूलम् । वीरुधाम् । बभूव ।
ताः । त्वा । पुत्रऽविद्याय । दैवीः । प्र । अवन्तु । ओषधयः ॥ ६ ॥

( २४ ) चतुर्विंशं सूक्तम्

(१-७) सप्तर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । वनस्पतिः प्रजापतिर्वा देवता । (१, ३-७) प्रथमर्च-स्तृतीयादिपञ्चानाञ्चानुष्टुप्, (२) द्वितीयायाश्च निचृत्पथ्यापङ्क्तिश्छन्दसी ॥

पयस्वतीरोषधयः पयस्वन्मामकं वचः ।
अथो पयस्वतीनामा भरेहं सहस्रशः ॥१॥
वेदाहं पयस्वन्तं चकार धान्यं१ बहु ।
संभृत्वा नाम यो देवस्तं वयं हवामहे योयो अयज्वनो गृहे ॥२॥
इमा याः पञ्च प्रदिशो मानवीः पञ्च कृष्टयः ।
वृष्टे शापं नदीरिवेह स्फातिं समावहान् ॥३॥
उदुत्सं शतधारं सहस्रधारमक्षितम् ।
एवास्माकेदं धान्यं१ सहस्रधारमक्षितम् ॥४॥
शतहस्त समाहर सहस्रहस्त सं किर ।
कृतस्य कार्य१स्य चेह स्फातिं समावह ॥५॥

पयस्वतीः । ओषधयः । पयस्वत् । मामकम् । वचः ।
अथो इति । पयस्वतीनाम् । आ । भरे । अहम् । सहस्रऽशः ॥ १ ॥
वेद । अहम् । पयस्वन्तम् । चकार । धान्यम् । बहु ।
सम्ऽभृत्वा । नाम । यः । देवः । तम् । वयम् । हवामहे । यःऽयः । अयज्वनः । गृहे ॥२॥
इमाः । याः । पञ्च । प्रऽदिशः । मानवीः । पञ्च । कृष्टयः ।
वृष्टे । शापम् । नदीःऽइव । इह । स्फातिम् । सम्ऽआवहान् ॥ ३ ॥
उत् । उत्सम् । शतऽधारम् । सहस्रऽधारम् । अक्षितम् ।
एव । अस्माक । इदम् । धान्यम् । सहस्रऽधारम् । अक्षितम् ॥ ४ ॥
शतऽहस्त । सम्ऽआहर । सहस्रऽहस्त । सम् । किर ।
कृतस्य । कार्यस्य । च । इह । स्फातिम् । सम्ऽआवह ॥ ५ ॥

**III.23.6** The creeping herbs, whose father is the sky, mother the earth, and origin the ocean, may those medicinal plants, with divine properties, assist you in obtaining a son.

### Vanaspaḥ

**III.24.1** May the plants (oṣadhayaḥ) be full of substantial sap (payasvatī).May my words be full of substance.May I procure thousand times of grain of the plants full of substance.

**III.24.2** I know the Lord of substance who has created plenty of grains. Whoso is called the bestower divine, him we hereby invoke. May he grant to us whatever is in the house of him who worships not.

**III.24.3** May the five regions of earth and all the five categories of men bring prosperity to this place just as after a heavy rain a roaring river brings the drift in its current.

**III.24.4** The spring of water comes out in a hundred streams and in a thousand streams ever unexhausted, so may our this store of grains increase in a thousand streams ever unexhausted.

**III.24.5** O hundred handed, may you gather. O thousand-handed, may you distribute. And may you bring about growth of what is accomplished and what is yet to be accomplished here.

तिस्रो मात्रा गन्धर्वाणां चतस्रो गृहपत्न्याः ।
तासां या स्फातिमत्तमा तया त्वाभि मृशामसि ॥६॥
उपोहश्च समूहश्च क्षत्तारौ ते प्रजापते ।
ताविहा वहतां स्फातिं बहुं भूमानमक्षितम् ॥७॥

तिस्रः । मात्राः । गन्धर्वाणाम् । चतस्रः । गृहऽपत्न्याः ।
तासाम् । या । स्फातिमत्ऽतमा । तया । त्वा । अभि । मृशामसि ॥ ६ ॥
उपऽऊहः । च । सम्ऽऊहः । च । क्षत्तारौ । ते । प्रजाऽपते ।
तौ । इह । आ । वहताम् । स्फातिम् । बहुम् । भूमानम् । अक्षितम् ॥ ७ ॥

## ( २५ ) पञ्चविंशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्य भृगुर्ऋषिः । मित्रावरुणौ कामेषवश्च देवताः । अनुष्टुप् छन्दः ॥

उत्तुदस्त्वोत्तुदतु मा धृथाः शयने स्वे ।
इषुः कामस्य या भीमा तया विध्यामि त्वा हृदि ॥१॥
आधीपर्णां कामशल्यामिषुं संकल्पकुल्मलाम् ।
तां सुसंनतां कृत्वा कामो विध्यतु त्वा हृदि ॥२॥
या प्लीहानं शोषयति कामस्येषुः सुसंनता ।
प्राचीनपक्षा व्योषा तया विध्यामि त्वा हृदि ॥३॥
शुचा विद्धा व्योषया शुष्कास्याभि सर्प मा ।
मृदुर्निर्मन्युः केवली प्रियवादिन्यनुव्रता ॥४॥

उत्ऽतुदः । त्वा । उत् । तुदतु । मा । धृथाः । शयने । स्वे ।
इषुः । कामस्य । या । भीमा । तया । विध्यामि । त्वा । हृदि ॥ १ ॥
आधीऽपर्णाम् । कामऽशल्याम् । इषुम् । संकल्पऽकुल्मलाम् ।
ताम् । सुऽसंनताम् । कृत्वा । कामः । विध्यतु । त्वा । हृदि ॥ २ ॥
या । प्लीहानम् । शोषयति । कामस्य । इषुः । सुऽसंनता ।
प्राचीनऽपक्षा । विऽओषा । तया । विध्यामि । त्वा । हृदि ॥ ३ ॥
शुचा । विद्धा । विऽओषया । शुष्कऽआस्या । अभि । सर्प । मा ।
मृदुः । निःऽमन्युः । केवली । प्रियऽवादिनी । अनुऽव्रता ॥ ४ ॥

**III.24.6** Three units (tisro-matrā), or three measures of the agriculturists (gandharva) and four units of their womenfolk are there for acquiring prosperity. Out of them, O food grain, I treat you with the one, which is moṣt fattening for you.

**III.24.7** O Lord of creatures, the acquisition (of wealth) (upoha) and (its) accumulation (Samūha) are your two attendants. May both of them bring here prosperity of all sorts, abundant and never diminishing.

## Kameṣu - Sex

**III.25.1** May the exciter, excite you. May you rest in your bed. With the sexual passioned arrow, which is terrible, I pierce you in the heart.

**III.25.2** With his arrow, which is winged with mental pains, has sexual desire as ịnto point, and desperate determination as a joint of the shaft and the point, may the sexual passion, aiming it well, pierce you in the heart.

**III.25.3** The Kama's (sexual passion) arrow, which fixed with straight wings, burning fiercely and well - aimed withers out the spleen, therewith I pierce you in the heart.

**III.25.4** Pierced with that burning and sex-stimulating arrow, may you come stealthily to me dry-mouthed, softened, free from anger, solely mine, sweet-tongued and devoted to me.

आजामि त्वाजन्या परि मातुरथो पितुः ।
यथा मम क्रतावसो मम चित्तमुपायसि ॥५॥
व्यस्यै मित्रावरुणौ हृदश्चित्तान्यस्यतम् ।
अथैनामक्रतुं कृत्वा ममैव कृणुतं वशे ॥६॥

आ । अजामि । त्वा । आऽअजन्या । परि । मातुः । अथो इति । पितुः ।
यथा । मम । क्रतौ । असः । मम । चित्तम् । उपऽआयसि ॥५॥
वि । अस्यै । मित्रावरुणौ । हृदः । चित्तानि । अस्यतम् ।
अथ । एनाम् । अक्रतुम् । कृत्वा । मम । एव । कृणुतम् । वशे ॥ ६ ॥

( २६ ) षड्विंशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्याथर्वा ऋषिः । (१) प्रथमर्चः साग्नयो हेतयः, (२) द्वितीयायाः सकामा अविष्यवः, (३) तृतीयाया अब्युक्ता वैराजाः, (४) चतुर्थ्याः सवाताः प्रविध्यन्तः, (५) पञ्चम्याः सौषधिका निलिम्पाः, (६) षष्ठ्याश्च बृहस्पतियुक्ता अवस्वन्तो देवताः । (१) प्रथमाया- स्त्रिष्टुप्, (२, ५-६) द्वितीयापञ्चमीषष्ठीनां जगती, (३-४) तृतीयाचतुर्थ्योश्च भुरिक्त्रिष्टुप् छन्दांसि । प्रत्येकं पञ्चपदा विपरीतपादलक्ष्मा ॥

ये३ऽस्यां स्थ प्राच्यां दिशि हेतयो नाम देवास्तेषां वो अग्निरिषवः ।
ते नो मृडत ते नोधि ब्रूत तेभ्यो वो नमस्तेभ्यो वः स्वाहा ॥१॥
ये३ऽस्यां स्थ दक्षिणायां दिश्यविष्यवो नाम देवास्तेषां वः काम इषवः ।
ते नो मृडत ते नोधि ब्रूत तेभ्यो वो नमस्तेभ्यो वः स्वाहा ॥२॥
ये३ऽस्यां स्थ प्रतीच्यां दिशि वैराजा नाम देवास्तेषां व आप इषवः ।
ते नो मृडत ते नोधि ब्रूत तेभ्यो वो नमस्तेभ्यो वः स्वाहा ॥३॥
ये३ऽस्यां स्थोदीच्यां दिशि प्रविध्यन्तो नाम देवास्तेषां वो वात इषवः ।
ते नो मृडत ते नोधि ब्रूत तेभ्यो वो नमस्तेभ्यो वः स्वाहा ॥४॥

ये । अस्याम् । प्राच्याम् । दिशि । हेतयः । नाम । देवाः । तेषाम् । वः । अग्निः । इषवः ।
ते । नः । मृडत । ते । नः । अधि । ब्रूत । तेभ्यः । वः । नमः । तेभ्यः । वः । स्वाहा ॥ १ ॥
ये । अस्याम् । स्थ । दक्षिणायाम् । दिशि । अविष्यवः । नाम । देवाः । तेषाम् । वः । कामः । इषवः ।
ये । अस्याम् । स्थ । प्रतीच्याम् । दिशि । वैराजाः । नाम । देवाः । तेषाम् । वः । आपः । इषवः ।० ॥
ये । अस्याम् । स्थ । उदीच्याम् । दिशि । प्रऽविध्यन्तः । नाम । देवाः । तेषाम् । वः ।
वातः । इषवः ।०॥४॥

**III.25.5** Towards me I urge you, who have not given birth to any baby yet, away from your mother and away from your father, so that you may share my work and please my heart (be nearer to my heart).

**III.25.6** O Lord friendly and venerable, may you bless her with fine qualities of head and heart. Then suggesting her not to act independently, may you make her subject only to me (may you put her under my sole control).

## Weapons and Missiles - Iṣavaḥ

**III.26.1** O enlightened ones, slayers (heti) by name are devas, who are posted in the eastern region ( प्राची ), fire ( अग्निः ) divine is your arrows. As such may you grant us happiness; may you speak to us encouraging. Our homage be to you. To you as such we hereby dedicate.

**III.26.2** O enlightened ones, willing to protect, protectors by name, who are posted in the southern region, desire is your arrows. As such may you grant us happiness; may you speak to us encouraging words. Our homage be to you. To you as such we hereby dedicate.

**III.26.3** O enlightened ones, food-giver, vairāja (Viraja) by name, who are posted in the western region, waters are your arrows. As such may you grant us happiness; may you speak to us encouraging words. Our homage be to you. To you as such we hereby dedicate.

**III.26.4** O enlightened ones, piercers (Pravidhyantaḥ) by name, who are posted in the northern region, strong winds are your arrows. As such may you grant us happiness; may you speak to us encouraging words. Our homage be to you. To you as such we hereby dedicate.

येऽ३स्यां स्थ ध्रुवायां दिशि निलिम्पा नाम देवास्तेषां व ओषधीरिषवः ।
ते नो मृडत ते नोधि ब्रूत तेभ्यो वो नमस्तेभ्यो वः स्वाहा ॥५॥
येऽ३स्यां स्थोर्ध्वायां दिश्यवस्वन्तो नाम देवास्तेषां वो बृहस्पतिरिषवः ।
ते नो मृडत ते नोधि ब्रूत तेभ्यो वो नमस्तेभ्यो वः स्वाहा ॥६॥

ये । अस्याम् । स्थ । ध्रुवायाम् । दिशि । निऽलिम्पाः । नाम । देवाः । तेषाम् । वः । ओषधीः । इषवः । ० ॥ ५ ॥

ये । अस्याम् । स्थ । ऊर्ध्वायाम् । दिशि । अवस्वन्तः । नाम । देवाः । तेषाम् । वः । बृहस्पतिः । इषवः । ० ॥ ६ ॥

## ( २७ ) सप्तविंशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्याथर्वा ऋषिः । (१) प्रथमर्चः प्राची दिगग्निरसित आदित्याः, (२) द्वितीयाया दक्षिणा दिगिन्द्रस्तिरश्चिराजिः पितरः, (३) तृतीयायाः प्रतीची दिग्वरुणः पृदाकुरन्नम्, (४) चतुर्थ्या उदीची दिक्सोमः स्वजोऽशनिः, (५) पञ्चम्या ध्रुवा दिग्विष्णुः कल्माषग्रीवो वीरुधः, (६) षष्ठ्याश्चोर्ध्वा दिग्बृहस्पतिः श्वित्रं वर्षश्च देवताः । (१, ३-४, ६) प्रथमा-तृतीयाचतुर्थीषष्ठीनां पञ्चपदा ककुम्मतीगर्भाष्टिः, (२) द्वितीयाया पञ्चपदा ककुम्मतीगर्भात्यष्टिः, (५) पञ्चम्याश्च पञ्चपदा ककुम्मतीगर्भा भुरिगष्टिश्छन्दांसि ॥

प्राची दिगग्निरधिपतिरसितो रक्षितादित्या इषवः ।
तेभ्यो नमोधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्यो अस्तु ।
योऽ३स्मान्द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥१॥
दक्षिणा दिगिन्द्रोधिपतिस्तिरश्चिराजी रक्षिता पितर इषवः ।
तेभ्यो नमोधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्यो अस्तु ।
योऽ३स्मान्द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥२॥
प्रतीची दिग्वरुणोधिपतिः पृदाकू रक्षितान्नमिषवः ।
तेभ्यो नमोधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्यो अस्तु ।
योऽ३स्मान्द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥३॥

प्राची । दिक् । अग्निः । अधिऽपतिः । असितः । रक्षिता । आदित्याः । इषवः । तेभ्यः । नमः । अधिपतिऽभ्यः । नमः । रक्षितृऽभ्यः । नमः । इषुऽभ्यः । नमः । एभ्यः । अस्तु । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः । तम् । वः । जम्भे । दध्मः ॥ १ ॥

दक्षिणा । दिक् । इन्द्रः । अधिऽपतिः । तिरश्चिऽराजिः । रक्षिता । पितरः । इषवः । ०० ॥२॥

प्रतीची । दिक् । वरुणः । अधिऽपतिः । पृदाकुः । रक्षिता । अन्नम् । इषवः । ०० ॥ ३ ॥

**III.26.5** O enlightened ones, deeply attached (Nilimpā) by name, posted in the region under-neath, plants are your arrows. As such may you grant us happiness; may you speak to us encouraging words. Our homage be to you. To you as such we hereby dedicate.

**III.26.6** O enlightened ones, defenders (Avasvantaḥ) by name, who are posted in the zenith region (ūrdhava) the Lord supreme (bṛhaspati) is your arrows. As such may you grant us happiness; may you speak to us encouraging words. Our homage be to you. To you as such we hereby dedicate.

**III.26.**

| Quarter | Divinity | Arrow |
|---|---|---|
| East | Heti(missile) | Agni |
| South | Vairāja | Kāma |
| West | Pravidhyantā | Vāta |
| Nadir | Vilimpāḥ | Oṣadhi |
| Zenith | Avasvantaḥ | Bṛhaspati |

## Regions : lords,defenders and arrows

**III.27.1** **Northern** region Agni(fire) is its Lord, Asitah is its defender, Ādityāḥ the arrows, our homage to them; homage to the Lords, homage to defenders, homage to the arrows, homage to all of them. Him who hates us and whom we do hate, we commit to your jaws.

**III.27.2** Southern region; Lightening is its lord. Tiraścirājī (snake with transverse streaks) is its defender. Pitaraḥ (six seasons) are the arrows. Our homage be to them; homage to the lords; homage to defenders; homage to the arrows; homage to all of them. Him, who hates us and whom we do hate, we commit to your jaws.

**III.27.3** Western region; Ocean is its Lord. Pradaku (viper snake) is its defender. Food grains are the arrows. Our homage be to them; homage to the lords; homage to defenders; homage to the arrows; homage to all of them. Him, who hates us and whom we do hate, we commit to your jaws.

उदीची दिक्सोमोधिपतिः स्वजो रक्षिताशनिरिषवः ।
तेभ्यो नमोधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्यो अस्तु ।
योऽस्मान्द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥४॥
ध्रुवा दिग्विष्णुरधिपतिः कल्माषग्रीवो रक्षिता वीरुध इषवः ।
तेभ्यो नमोधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्यो अस्तु ।
योऽस्मान्द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥५॥
ऊर्ध्वा दिग्बृहस्पतिरधिपतिः श्वित्रो रक्षिता वर्षमिषवः ।
तेभ्यो नमोधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नम एभ्यो अस्तु ।
योऽस्मान्द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मः ॥६॥

उदीची । दिक् । सोमः । अधिऽपतिः । स्वजः । रक्षिता । अशनिः । इषवः । ०० ॥ ४ ॥
ध्रुवा । दिक् । विष्णुः । अधिऽपतिः । कल्माषऽग्रीवः । रक्षिता । वीरुधः । इषवः ।००॥५॥
ऊर्ध्वा । दिक् । बृहस्पतिः । अधिऽपतिः । श्वित्रः । रक्षिता । वर्षम् । इषवः । ००॥६॥

### ( २८ ) अष्टाविंशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । यमिनी देवता । (१) प्रथमर्चोऽतिशक्वरीगर्भा चतुष्पदाति-जगती, (२-३) द्वितीयातृतीययोरनुष्टुप्, (४) चतुर्थ्या यवमध्या विराट्ककुप्, (५) पञ्चम्यास्त्रिष्टुप्, (६) षष्ठ्याश्च विराड्गर्भा प्रस्तारपङ्क्तिश्छन्दांसि ॥

एकैकयैषा सृष्ट्या सं बभूव यत्र गा असृजन्त भूतकृतो विश्वरूपाः ।
यत्र विजायते यमिन्यपर्तुः सा पशून्क्षिणाति रिफती रुशती ॥१॥
एषा पशून्त्सं क्षिणाति क्रव्याद्भूत्वा व्यद्वरी ।
उतैनां ब्रह्मणे दद्यात्तथा स्योना शिवा स्यात् ॥२॥
शिवा भव पुरुषेभ्यो गोभ्यो अश्वेभ्यः शिवा ।
शिवास्मै सर्वस्मै क्षेत्राय शिवा न इहैधि ॥३॥

एकऽएकया । एषा । सृष्ट्या । सम् । बभूव । यत्र । गाः । असृजन्त । भूतऽकृतः । विश्वऽरूपाः ।
यत्र । विऽजायते । यमिनी । अपऽऋतुः । सा । पशून् । क्षिणाति । रिफती । रुशती ॥१॥
एषा । पशून् । सम् । क्षिणाति । क्रव्यऽअत् । भूत्वा । विऽअद्वरी ।
उत । एनाम् । ब्रह्मणे । दद्यात् । तथा । स्योना । शिवा । स्यात् ॥ २ ॥
शिवा । भव । पुरुषेभ्यः । गोभ्यः । अश्वेभ्यः । शिवा ।
शिवा । अस्मै । सर्वस्मै । क्षेत्राय । शिवा । नः । इह । एधि ॥ ३ ॥

**III.27.4** Northern region; The moon is its lord. Svaja (self-born snake) is its defender. Thunder (asani) are the arrows. Our homage be to them; homage to the lords; homage to all of them. Him, who hates us and whom we do hate, we commit to your jaws.

**III.27.5** Nadir region; Visnu (the sun) is its lord. Kalmasagriva (spotty-necked snake) is its defender. Creeper plants are the arrows. Our homage be to them; homage to the lords; homage to the defenders; homage to the arrows; homage to all of them. Him, who hates us and whom we do hate, we commit to your jaws.

**III.27.6** Zenith region; Bṛhaspati (Jupiter) is its lord. Śvitra (white snake) is its defender. Rains are the arrows. Our homage be to them; homage to the lords; homage to defenders; homage to the arrows; homage to all of them. Him, who hates us and whom we do hate, we commit to your jaws.

**Hymn III.27**

| Regions | Adhipati(Regent) | Warder | Arrow |
|---|---|---|---|
| East | Agni | Asit | Āditya |
| South | Indra | Tiraścirājī | Pitṛ |
| West | Varuṇa | Pṛdākū | Anna |
| North | Soma | Svajah | Aśani |
| Nadir | Viṣṇu | Kalmāṣagrīva | Vīrudha |
| Zenith | Bṛhaspati | Savitṛ | Varṣa |

## Yaminī

**III.28.1** This cow herself has been born in a single baby manner (eka ekayā) where the breeders breed cows of all descriptions. Where a cow bears twins (Yaminī) against the natural order, charging (riphatī) and attacking (ruśati) she ruins the cattle.

**III.28.2** Such a cow, turning into a flesh-eater (kravyād) and devourer (vi-advarī), ruins the cattle completely. Better, one should give her to some wise and learned person; thereby she will become delightful as well as beneficial.

**III.28.3** May you be beneficial to men and beneficial to kine as well as to horses. May you be beneficial to all (sarvasmai) this field (kṣetrāya). May you prosper here being beneficial to us.

इह पुष्टिरिह रस इह सहस्रसातमा भव । पशून्यमिनि पोषय ॥४॥
यत्रा सुहार्दः सुकृतो मदन्ति विहाय रोगं तन्वः स्वायाः ।
तं लोकं यमिन्यभिसंबभूव सा नो मा हिंसीत्पुरुषान्पशूंश्च ॥५॥
यत्रा सुहार्दां सुकृतामग्निहोत्रहुतां यत्र लोकः ।
तं लोकं यमिन्यभिसंबभूव सा नो मा हिंसीत्पुरुषान्पशूंश्च ॥६॥

इह । पुष्टिः । इह । रसः । इह । सहस्रऽसातमा । भव । पशून् । यमिनि । पोषय ॥ ४ ॥
यत्र । सुऽहार्दः । सुऽकृतः । मदन्ति । विऽहाय । रोगम् । तन्वः । स्वायाः ।
तम् । लोकम् । यमिनी । अभिऽसंबभूव । सा । नः । मा । हिंसीत् । पुरुषान् । पशून् । च ॥ ५ ॥
यत्र । सुऽहार्दाम् । सुऽकृताम् । अग्निहोत्रऽहुताम् । यत्र । लोकः ।
तम् । लोकम् । यमिनी । अभिऽसंबभूव । सा । नः । मा । हिंसीत् । पुरुषान् । पशून् । च ॥ ६ ॥

( २९ ) एकोनत्रिंशं सूक्तम्

(१-८) अथर्वास्यास्य सूक्तस्योद्दालक ऋषिः । (१-६) प्रथमादिषड्ऋचां शितिपादविः, (७) सप्तम्याः कामः, (८) अष्टम्याश्च भूमिर्देवताः । (१, ३) प्रथमातृतीययोर्ऋचोः पथ्यापङ्क्तिः, (२, ४-६) द्वितीयायाश्चतुर्थ्यादितृचस्य चानुष्टुप् , (७) सप्तम्यास्त्र्यवसाना षट्पदा उपरिष्टाद्दैवी बृहती ककुम्मतीगर्भा विराड्जगती, (८) अष्टम्याश्चोपरिष्टाद्बृहती छन्दांसि ॥

यद्राजानो विभजन्त इष्टापूर्तस्य षोडशं यमस्यामी सभासदः ।
अविस्तस्मात्प्र मुञ्चति दत्तः शितिपात्स्वधा ॥१॥
सर्वान्कामान्पूरयत्याभवन्प्रभवन्भवन् ।
आकूतिप्रोविर्दत्तः शितिपान्नोप दस्यति ॥२॥
यो ददाति शितिपादमविं लोकेन संमितम् ।
स नाकमभ्यारोहति यत्र शुल्को न क्रियते अबलेन बलीयसे ॥३॥

यत् । राजानः । विऽभजन्ते । इष्टापूर्तस्य । षोडशम् । यमस्य । अमी इति । सभाऽसदः ।
अविः । तस्मात् । प्र । मुञ्चति । दत्तः । शितिऽपात् । स्वधा ॥ १ ॥
सर्वान् । कामान् । पूरयति । आऽभवन् । प्रऽभवन् । भवन् ।
आकूतिऽप्रः । अविः । दत्तः । शितिऽपात् । न । उप । दस्यति ॥ २ ॥
यः । ददाति । शितिऽपादम् । अविम् । लोकेन । सम्ऽमितम् ।
सः । नाकम् । अभिऽआरोहति । यत्र । शुल्कः । न । क्रियते । अबलेन । बलीयसे ॥ ३ ॥

**III.28.4** Here be the prosperity. Here be the joy. May you become bestower of thousands here. O mother of twins (yamini), make our herd prosper.

**III.28.5** Where good-hearted and good-acting ones live in happiness having been freed from diseases of their body, to that world the bearer of twins (yaminī) has come. May she not harm our men and cattle.

**III.28.6** Where lies the world of good-hearted and good-acting people, who perform sacrifices duly, to that world the bearer of twins (yaminī) has come. May she not harm our men and cattle.

**Śitipāda and Aviḥ**

**III.29.1** What the princes, the members of the controller's court, divide as sixteenth part of income as tax for civic amenities, from that Avi ( अवि protection tax) makes, one exempt if paid white footed ( honestly ) , in one's own interest (svadha).

**III.29.2** The protection tax, paid white-footed, arising from all sides, capable of producing results, growing in itself, and fulfiller of desires, fulfills all the desires. It is never wasted.

**III.29.3** Who-so pays the protection tax white-footed as approved by the people, he ascends to the world of happiness, where the strong cannot charge any fee from the weak.

पञ्चापूपं शितिपादमविं लोकेन संमितम् ।
प्रदातोप जीवति पितॄणां लोकेक्षितम् ॥४॥
पञ्चापूपं शितिपादमविं लोकेन संमितम् ।
प्रदातोप जीवति सूर्यामासयोरक्षितम् ॥५॥
इरेव नोप दस्यति समुद्र इव पयो महत् ।
देवौ सवासिनाविव शितिपान्नोप दस्यति ॥६॥
क इदं कस्मा अदात्कामः कामायादात् ।
कामो दाता कामः प्रतिग्रहीता कामः समुद्रमा विवेश ॥
कामेन त्वा प्रति गृह्णामि कामैतत्ते ॥७॥

भूमिष्ट्वा प्रति गृह्णात्वन्तरिक्षमिदं महत् ।
माहं प्राणेन मात्मना मा प्रजया प्रतिगृह्य वि राधिषि ॥८॥

पञ्चऽअपूपम् । शितिऽपादम् । अविम् । लोकेन । सम्ऽमितम् ।
प्रऽदाता । उप । जीवति । पितॄणाम् । लोके । अक्षितम् ॥४ ॥

पञ्चऽअपूपम् । शितिऽपादम् । अविम् । लोकेन । सम्ऽमितम् ।
प्रऽदाता । उप । जीवति । सूर्यामासयोः । अक्षितम् ॥ ५ ॥

इराऽइव । न । उप । दस्यति । समुद्रःऽइव । पयः । महत् ।
देवौ । सवासिनौऽइव । शितिऽपात् । न । उप । दस्यति ॥६॥

कः । इदम् । कस्मै । अदात् । कामः । कामाय । अदात् । कामः । दाता । कामः । प्रतिऽग्रहीता । कामः । समुद्रम् । आ । विवेश । कामेन । त्वा । प्रति । गृह्णामि । काम । एतत् । ते ॥

भूमिः । त्वा । प्रति । गृह्णातु । अन्तरिक्षम् । इदम् । महत् ।
मा । अहम् । प्राणेन । मा । आत्मना । मा । प्रऽजया । प्रतिऽगृह्य । वि । राधिषि ॥ ८ ॥

( ३० ) त्रिंशं सूक्तम्

(१–७) सप्तर्चस्यास्य सूक्तस्याथर्वा ऋषिः । चन्द्रमा सांमनस्यञ्च देवते । (१–४) प्रथमादिचतुर्ऋचामनुष्टुप्
(५) पञ्चम्या विराड्जगती, (६) षष्ठ्याः प्रस्तारपङ्क्तिः, (७) सप्तम्याश्च त्रिष्टुप् छन्दांसि ॥

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।
अन्यो अन्यमभि हर्यत वत्सं जातमिवाघ्न्या ॥१॥

सऽहृदयम् । साम्ऽमनस्यम् । अविऽद्वेषम् । कृणोमि । वः ।
अन्यः । अन्यम् । अभि । हर्यत । वत्सम् । जातम्ऽइव । अघ्न्या ॥ १ ॥

**III.29.4** Whoso pays the protection tax white-footed as approved by the people, along with five cakes , he, the payer, stays in the world of the elders ever undiminished.

**III.29.5** One who pays the protection tax, white-footed as approved by the people, along with five cakes , enjoys its benefit ever undiminished as long as the Sun and the moon last.

**III.29.6** The white-footed (protection tax) never exhausts, like the earth, like the immense water of the ocean and like the twin bounties of Nature living in a common house.

### Kāmaḥ - Passion and Sex

**III.29.7** Who gives it and to whom? Kāma (desire) gives it to Kāma. The desire is the giver. The desire is the receiver. The desire enters into the Ocean. I accept you with desire. O desire, let yours be this.

**III.29.8** May earth receive you and may this vast midspace. Accepting you exclusively, may I not be deprived of my life, of my self, and of my progeny.

### Sam-manasyam - Harmony

**III.30.1** I hereby bring about unity of your hearts and unity of minds, free from malice. May each one of you love the other as a cow loves its new-born calf.

अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः ।
जाया पत्ये मधुमतीं वाचं वदतु शन्तिवान् ॥२॥
मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥३॥
येन देवा न वियन्ति नो च विद्विषते मिथः ।
तत्कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः ॥४॥
ज्यायस्वन्तश्चित्तिनो मा वि यौष्ट संराधयन्तः सधुराश्चरन्तः ।
अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान्वः संमनसस्कृणोमि ॥५॥
समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि ।
सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः ॥६॥
सध्रीचीनान्वः संमनसस्कृणोम्येकश्नुष्टीन्त्संवननेन सर्वान् ।
देवा इवामृतं रक्षमाणाः सायंप्रातः सौमनसो वो अस्तु ॥७॥

अनुऽव्रतः । पितुः । पुत्रः । मात्रा । भवतु । सम्ऽमनाः ।
जाया । पत्ये । मधुऽमतीम् । वाचम् । वदतु । शन्तिऽवाम् ॥ २ ॥
मा । भ्राता । भ्रातरम् । द्विक्षत् । मा । स्वसारम् । उत । स्वसा ।
सम्यञ्चः । सऽव्रताः । भूत्वा । वाचम् । वदत । भद्रया ॥ ३ ॥
येन । देवाः । न । विऽयन्ति । नो इति । च । विऽद्विषते । मिथः ।
तत् । कृण्मः । ब्रह्म । वः । गृहे । सम्ऽज्ञानम् । पुरुषेभ्यः ॥ ४ ॥
ज्यायस्वन्तः । चित्तिनः । मा । वि । यौष्ट । सम्ऽराधयन्तः । सऽधुराः । चरन्तः ।
अन्यः । अन्यस्मै । वल्गु । वदन्तः । आ । इत । सध्रीचीनान् । वः । सम्ऽमनसः । कृणोमि ॥ ५ ॥
समानी । प्रऽपा । सह । वः । अन्नऽभागः । समाने । योक्त्रे । सह । वः । युनज्मि ।
सम्यञ्चः । अग्निम् । सपर्यत । अराः । नाभिम्ऽइव । अभितः ॥ ६ ॥
सध्रीचीनान् । वः । सम्ऽमनसः । कृणोमि । एकऽश्नुष्टीन् । सम्ऽवननेन । सर्वान् ।
देवाःऽइव । अमृतम् । रक्षमाणाः । सायम्ऽप्रातः । सौमनसः । वः । अस्तु ॥ ७ ॥

**III.30.2** May the son act in accordance with the father's wishes; may he be of one mind with the mother as well. May the wife talk to her husband in words sweet as honey, and soothing.

**III.30.3** Let no brother cherish malice against a brother, nor a sister against her sister. Becoming accordant to each other in thoughts and intents, speak your speech in friendly way.

**III.30.4** With which the enlightened ones are not alienated, nor there is hatred against each other, such a unifying prayer we make in your home for members of the house-hold.

**III.30.5** Behaving properly towards the elders and the yonders, considerate, pleasing each other and working for common good, may you never part company. Come here each talking affectionately to the other. I hereby make you straightforward and (one-minded); unanimous (one-aimed).

**III.30.6** Let common be your drinking place, and common your sharing of food. I hereby yoke you together under a common yoke. With one intent let you gather around the adorable leader, like the spokes around the nave of a wheel.

**III.30.7** With this harmonization, I make all of you one-aimed, one-minded and one-fooded (sharing a common meal). Like the guarding immortality, enlightened ones, let you be friendly to each other in the morning as well as in the evening.

( ३१ ) एकत्रिंशं सूक्तम्

(१-११) एकादशर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । पाप्महा मन्त्रोक्ताश्च देवताः । (१-३, ६-११) प्रथमादितृचस्य षष्ठ्यादिषण्णाञ्चानुष्टुप्, (४) चतुर्थ्या भुरिगनुष्टुप्, (५) पञ्चम्याश्च विराट् प्रस्तारपङ्क्तिश्छन्दांसि ॥

वि देवा जरसावृतन्वि त्वमग्ने अरात्या ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥१॥

व्यार्त्या पवमानो वि शक्रः पापकृत्यया ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥२॥

वि ग्राम्याः पशव आरण्यैर्व्यापस्तृष्णयासरन् ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥३॥

वी३मे द्यावापृथिवी इतो वि पन्थानो दिशंदिशम् ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥४॥

त्वष्टा दुहित्रे वहतुं युनक्तीतीदं विश्वं भुवनं वि याति ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥५॥

अग्निः प्राणान्त्सं दधाति चन्द्रः प्राणेन संहितः ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥६॥

वि । देवाः । जरसा । अवृतन् । वि । त्वम् । अग्ने । अरात्या ।
वि । अहम् । सर्वेण । पाप्मना । वि । यक्ष्मेण । सम् । आयुषा ॥ १ ॥

वि । आर्त्या । पवमानः । वि । शक्रः । पापऽकृत्यया । वि । अहम् । ०० ॥ २ ॥

वि । ग्राम्याः । पशवः । आरण्यैः । वि । आपः । तृष्णया । असरन् । वि । ०० ॥ ३ ॥

वि । इमे इति । द्यावापृथिवी इति । इतः । वि । पन्थानः । दिशम्ऽदिशम् । वि । ०० ॥ ४ ॥

त्वष्टा । दुहित्रे । वहतुम् । युनक्ति । इति । इदम् । विश्वम् । भुवनम् । वि । याति । वि । अहम् ।००।

अग्निः । प्राणान् । सम् । दधाति । चन्द्रः । प्राणेन । सम्ऽहितः । वि । अहम् । ०० ॥ ६ ॥

## Freedom from Evils

**III.31.1** May the bounties of Nature, keep this away from old age. May, O you adorable Lord, keep him away from misery. I free this man from all evil, and from wasting disease. I unite him with a long life.

**III.31.2** May the purifier Lord keep this man away from physical pain and the almighty away from sinful actions. I free this man from all evil, and from wasting disease. I unite him with a long life.

**III.31.3** Domestic cattle keep away from the wild beasts and the waters keep away from the thirst. I free this man form all the evil and from wasting disease. I unite you with a long life.

**III.31.4** These heaven and earth are parted from each other, and parted are the ways going in different directions. So I free this man from all the evil and from wasting disease. I unite you with a long life.

**III.31.5** Knowing that the supreme architect (of destinies) prepares bridal-gifts for her daughter, all this creation parts off (to make way for him). I free this man from all evil, and from wasting disease. I unite him with a long life.

**III.31.6** The bio-fire makes the vital breaths capable of performing their respective actions, and the moon is closely connected with the vital breath. I free this man from all evil and from wasting disease. I unite him with a long life.

प्राणेन विश्वतोवीर्यं देवाः सूर्यं समैरयन् ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥७॥
आयुष्मतामायुष्कृतां प्राणेन जीव मा मृथाः ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥८॥
प्राणेन प्राणतां प्राणेहैव भव मा मृथाः ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥९॥
उदायुषा समायुषोदोषधीनां रसेन ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥१०॥
आ पर्जन्यस्य वृष्ट्योदस्थामामृता वयम् ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥११॥

प्राणेन । विश्वतःऽवीर्यम् । देवाः । सूर्यम् । सम् । ऐरयन् । वि । अहम् ।०० ॥ ७ ॥

आयुष्मताम् । आयुःऽकृताम् । प्राणेन । जीव । मा । मृथाः । वि । अहम् । ०० ॥ ८ ॥

प्राणेन । प्राणताम् । प्र । अन । इह । एव । भव । मा । मृथाः । वि । अहम् । ०० ॥ ९ ॥

उत् । आयुषा । सम् । आयुषा । उत् । ओषधीनाम् । रसेन । वि । अहम् ॥००॥१०॥

आ । पर्जन्यस्य । वृष्ट्या । उत् । अस्थाम । अमृताः । वयम् । वि । अहम् । ०० ॥११॥

॥ इति तृतीयं काण्डम् ॥

**III.31.7** The bounties of Nature make the Sun, mighty in all respects, move up with the vital breath. I free this man from all evil and from wasting disease. I unite him with a long life.

**III.31.8** May you live on with the vital breath of those, that have long lives and that give long life. Let you not die. I free you from all evil and from wasting disease. I unite him with long life.

**III.31.9** May you live on with the vital breath of the vigorously living. Let you stay here. Let you not die. I free you from all evil and from wasting disease. I unite you with a long life.

**III.31.10** May we rise up full of life. May we be conjoined with life. May we rise up with the sap of plants. May I be free from all evil and from wasting disease. May I be conjoined with a long life.

**III.31.11** Hither with seasonal rains (Parjanya). We have stood up so far immortal, away from the niggard, away from all evil, away from wasting disease. May I be enjoined with a long life.

--------------------

**Here ends Kāṇḍa III**